# नाड़ीविज्ञानम् ।

---

## महामुनि-कणादविरचितम् ।

पण्डितकुलपतिना,
बि, ए, उपाधिधारिणा
श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण
विरचितया,
तदात्मजाभ्यां
पण्डित-श्रीमदाशुबोधविद्याभूषण-
पण्डित-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
प्रतिसंस्कृतया व्याख्यया समलङ्कृतं,
ताभ्यामेव प्रकाशितञ्च ।

चतुर्थसंस्करणम् ।

कलिकातानगरे
सिद्धेश्वरयन्त्रे
मुद्रितम् ।

---

ई १९२१ ।

# सूचीपत्रम्।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| मङ्गलाचरणम् … … | १ |
| वैद्यकप्रचारकाः … … | २ |
| नाड़ीनां संख्या मूलस्थानञ्च … | ४ |
| आकृतिभेदेन कर्म्मभेदेन च नामभेदः … | ६ |
| परीक्षणीया नाड़ी … … | ८ |
| परीक्षायाः कालरीतिः … … | १५ |
| नाड़ीपर्य्यायः … … | १७ |
| अङ्गुलिविशेषैः त्रिविधधातुज्ञानविधिः … | ,, |
| दोषलक्षणज्ञानम् … … | १९ |
| स्वस्था नाड़ी … … | २० |
| नाड्या वातादिज्ञानम् … … | २१ |
| नाड्या गतिभेदः … … | २२ |
| द्वन्द्वजा नाड़ी … … | २३ |
| त्रिदोषे नाड़ीगतिः … … | २५ |
| असाध्यसन्निपातजा नाड़ी … … | २६ |
| मृत्युकालज्ञानम् … … | ३० |
| असाध्यलक्षितायामपि साध्यत्वम् … | ३७ |
| निस्पन्दनाड्यामपि मृत्योरपवादः … | ३८ |
| मृत्युभयापवादः … … | ४१ |
| स्वस्थनाड़ीकथनम् … … | ,, |
| दुष्टनाड़ीलक्षणम् … … | ४२ |
| सुखसाध्या नाड़ी … … | ४३ |
| द्रव्यविशेषभक्षणे नाड़ीगतिः … | ४५ |
| यादृग्रसभोजने यादृशी नाड़ीगतिः … | ४७ |
| षड्रसादे नाड़ीगतिः … … | ४८ |
| प्रसङ्गात् रसस्वरूपम् … … | ,, |
| प्रसङ्गात् द्रव्याणामपि रसधर्म्मत्वम् … | ४९ |
| प्रातरादौ सुस्थनाड़ीज्ञानम् … | ५१ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ज्वरपूर्वरूपे नाड़ीगतिः | ५४ |
| सान्निपातिकपूर्वरूपे नाड़ीज्ञानम् | ५५ |
| ज्वरसंप्राप्तौ नाड़ीगतिः | ५६ |
| वायुप्रबलज्वरे नाड़ीगतिः | ,, |
| रमणान्तकालीननाड़ीगतिः | ५७ |
| समतीव्रवायौ नाड़ीगतिः | ५८ |
| पित्तज्वरे नाड़ीगतिः | ५९ |
| श्लेष्मला नाड़ी | ६० |
| वातपित्तगतनाड़ीज्ञानम् | ,, |
| वातश्लेष्मकालिकी नाड़ी | ६१ |
| पित्तश्लेष्मजा नाड़ी | ,, |
| रक्तापूर्णमलवती नाड़ी | ६२ |
| कामादौ नाड़ीज्ञानम् | ,, |
| विषमज्वरे नाड़ीगतिः | ६३ |
| ज्वरे रमणादौ नाड़ीज्ञानम् | ६६ |
| ज्वरकाले दधिभोजनजा नाड़ी | ,, |
| ज्वरत्यागात् व्यायामादौ नाड़ीगतिः | ६७ |
| अजीर्णे नाड़ीज्ञानम् | ६८ |
| क्षुधितमन्दानलादौ नाड़ीगतिः | ६९ |
| आमाशयादिदुष्टा नाड़ी | ७० |
| दीप्ताग्नौ नाड़ीगतिः | ७१ |
| ग्रहण्यां नाड़ीगतिः | ७१ |
| ग्रहण्यतिसारविलम्बिकादौ नाड़ीगतिः | ७३ |
| वेगरोध-विसूच्योः नाड़ी | ,, |
| आनाहमूत्रकृच्छ्ररोगवती नाड़ी | ७४ |
| शूलरोगे नाड़ी | ,, |
| प्रमेहरोगवती नाड़ी | ७५ |
| नाड़ीगत्या विषादिज्ञानम् | ,, |
| नाड्या गुल्मादिरोगज्ञानम् | ७६ |
| व्रणादौ नाड़ी | ७७ |
| वान्तशल्यहतादेः नाड़ीगतिः | ,, |


———

# नाड़ीसंस्थानचित्रम् ।




ख ग—धमनीमूलम् । ऊर्द्धमुखं, पश्चाद्गामि, निम्नमुखञ्चेति तत् त्रिविधम् ।

द क—कपालस्था धमनी ।

झ न—गलस्था धमनी ।

ग—कण्ठस्था धमनी ।

क—कक्षनाड़ो।

ज—धमनी स्कन्धस्था वा वक्षःस्था मूलनाड़ो।

त ङ—उदरस्था मूलनाड़ो।

ट ङ ज—आभ्यन्तरवस्तिनाड़ो।

ज ट—वाह्यवस्तिनाड़ो।

च—ऊरुस्था नाड़ो।

द—नलकास्थोया धमनी।

न—जानुपश्चात् धमनी।

व—जानुस्था सम्मुखनाड़ो।

ख त—पर्शुकाभ्यन्तरधमनी।

ह क—प्रगण्डीया नाड़ो।

त क—मणिबन्धस्था नाड़ो।

ग ध—प्रकोष्ठीया धमनी।

---

# नाड़ीविज्ञानम् ।

मङ्गलाचरणम् ।

यद्वक्त्रेभ्यः पञ्चसंख्यागतेभ्यो
वेदा जाता ऋग्यजुःसामरूपाः ।

टीकाकृतः मङ्गलाचरणम् ।

नत्वा वाणीं सरसिजवसां बिभ्रतीं शुभ्रकान्तिं
जीवानन्दो द्विजकुलभवो मन्दबुद्धिप्रभाणाम् ।
मच्छात्राणां मतिविकशनान्नाड़िविज्ञाननाम्नः
सम्यग् यत्नाद् रचयतितरां पुस्तकस्यास्य टीकाम् ॥

इह खलु महामुनिः कणादः प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये विशिष्टाऽऽप्ताऽऽचारपरम्पराप्रतिप्राप्तं मङ्गलमाचरितुं, तथा "आरोग्यं भास्करादिच्छेत् ज्ञानमिच्छेत्तु शङ्करात्" इति विधानवचनमवलम्ब्य एतदध्येतॄणां ज्ञानाधिक्यजननाय च शिवदातुः शिवस्य स्तुतिरूपं वाचिकं मङ्गलमाचरति, यदिति ।—पञ्चसंख्यागतेभ्यः पञ्चानां संख्या पञ्चसंख्या, (शिवभागवत् समासः) तां गतेभ्यः ("द्वितीयाश्रितातीतपतितगत—" इति द्वितीयासमासः) । पञ्चपरिमितेभ्यः, यद्वक्त्रेभ्यः यस्य शम्भोः वक्त्रेभ्यः आस्येभ्यः, पञ्चमुखेभ्यः इत्यर्थः, वेदाः श्रुतयः, जाताः वहिर्गताः, भुवि प्रथमं प्रचारिता इति यावत्, (न चात्र जनधातोरभूतोत्पत्तिरर्थः ज्ञातव्यः, वेदानां नित्यत्वात् स्वभावसंसिद्धस्वलक्षणत्वात्, भावस्वभावनित्यत्वात् स्वयम्प्रकाशत्वाच्च ; तेन प्रकाशार्थ एव जनधातुरत्रावधातव्यः) । ननु तन्त्रान्तरे ब्रह्मणो वेदाश्चत्वारः

सायुर्वेदाथर्ववेदस्य तस्मिन्
आस्तां शम्भौ श्रीकणादस्य भक्तिः ॥ १ ॥

वैद्यकप्रचारकाः।

आस्ते वेदः पञ्चमो वैद्यकाख्यो
वेत्ता कश्चित् तस्य नास्ते महेशात्।

---

प्रादुर्भूता इत्युक्तम्, अत्र तु शम्भोस्तत्प्रकाशकत्वोक्तिः कथं सङ्गच्छते? उच्यते,—गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषः एकस्यैवाद्वयस्य तस्य ब्रह्मसंज्ञकस्य तत्कर्त्तृत्वात् स्वेष्टदेवतस्य शम्भोः कणादेन तत्प्रकाशकत्वमुक्तं, त्रयाणामेवाभिन्नत्वात्। ते हि कतिविधाः? कानि वा तेषां नामधेयानि? इत्यत आह, ऋगिति।—ऋक् च यजुश्च साम च इति ऋग्यजुःसामानि, तानि एव रूपं स्वारूप्यं येषां ते, ऋग्वेदा यजुर्वेदाः सामवेदाश्च। तथा आयुर्वेदेन सह वर्त्तमानः इति सायुर्वेदः, स चासौ अथर्ववेदश्च इति सायुर्वेदाथर्ववेदः, (अत्र सहशब्दस्य पृथक्साहित्यं बोध्यं, "पित्रा सहाऽऽगतः पुत्रः" इत्यादिवत्)। एवं सति आयुर्वेदस्य अथर्ववेदान्तर्गतत्वं द्योतितम्; तदुक्तं सुश्रुते—"इह खलु आयुर्वेदो नाम यदुपाङ्गमथर्ववेदस्य" इत्यादि। चरकेऽपि—"चतुर्णामृक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या" इति। आयुर्वेदेन सह पञ्चधा वेदाः जाताः भुवि प्रचारिताः, तस्मिन् शम्भौ (शं कल्याणं भवति अस्मात् इति डुः) श्रीकणादस्य तन्नामकमुनेः, भक्तिः पूज्येषु अनुरागः, आस्ताम् (आस उपवेशने इत्यस्मात् प्रार्थनायां लोट्) उपवेशनन्तु गमननिवरतस्यावस्थानविशेषः, अतः तिष्ठतु इत्यर्थः। सत्याञ्च तस्मिन् भक्तौ ममायमुद्योगः सर्वथा सफलीभविष्यति इति भावः। इन्द्रवज्रा वृत्तं, तल्लक्षणं यथा,—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति ॥ १ ॥

अथाऽऽयुर्वेदस्य प्रामाण्यं स्थापयितुं वक्तृपरम्परानिर्देशपुरःसरम् अस्य

तस्माद्धाताऽध्यैष्ट तस्मात् तुराषाट्
तस्माज्ज्ञात्वा वक्तुमर्हामि शास्त्रम् ॥ २ ॥

वेदांशत्वं स्वस्य च गुरुमुखज्ञातृत्वेन वाचनार्हत्वं प्रदर्शयति, आस्ते इति।—वैद्यकाख्यः वैद्यको नाम, पञ्चमः ऋगादीनां चतुष्टयानां पञ्चसंख्यायाः पूरणः, वेदः आस्ते। किन्तु महेशात् शम्भोः, महेशं परित्यज्येत्यर्थः, ( ल्यब्लोपे पञ्चमी ) महेशादन्य इति यावत्, कश्चित् कोऽपि देवो मानवो वा, तस्य वैद्यकाख्यस्य वेदस्य, वेत्ता ज्ञाता, नास्ते नास्ति इत्यर्थः। यच्च चरकसुश्रुतादिभिः "ब्रह्मा प्रोवाच, ततः प्रजापतिरधिजगे, तस्मादश्विनो, अश्विभ्यामिन्द्रः" इत्यादिना ब्रह्मणः प्रथमवक्तृत्वम् उक्तं, तत्तु नानेन विरुध्यते, वेत्तुः शम्भोः अधीत्यैव तस्य वक्तृत्वस्मरणादिति। यच्च सुश्रुतेन—"इह खलु आयुर्वेदो नाम यदुपाङ्गमथर्ववेदस्य अनुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्वयम्भूः" इत्युक्तं, तत्र कृतवान् प्रकाशितवानित्यर्थः, शम्भोरधीत्येति निगूढार्थः। यद्वा,—वैद्यकाख्यपञ्चमवेदशब्देनात्र आगमशास्त्रान्तर्गतवैद्यकमभिप्रेतं, तन्त्रशास्त्रे आगमस्य पञ्चमवेदत्वेनाभिहितत्वात् तदङ्गस्य वैद्यकस्यापि पञ्चमवेदत्वम्; तन्त्रशास्त्रस्य शम्भुरेव वेत्ता वक्ता च। नाड़ीविज्ञानस्य रसचिकित्सादिकस्य च तदन्तर्गतत्वात् अत्र वैद्यकशब्देन तन्त्रोक्तवैद्यकांशस्यैवाभिधानं, न तु चरकसुश्रुतादेर्वैदिकस्य, तत्र नाड़ीविज्ञानादेर्विस्तरोक्त्यभावादिति विज्ञातव्यम्। किञ्च, चरकादौ ब्रह्मणः प्रजापतिर्दक्षः, ततः अश्विनो, ततः इन्द्रः, इन्द्रात् भरद्वाजधन्वन्तरिप्रभृतयः आयुर्वेदमधिजग्मुः इत्युक्तमस्ति, अत्र तु शम्भोर्ब्रह्मा, ब्रह्मणः इन्द्रः, ततः कणादादिः इत्युक्तम्, अतोऽपि अत्रोक्तवैद्यकस्य आगमान्तर्गतत्वं प्रतीयते, न तु अथर्ववेदान्तर्गतत्वम् इति। ननु यदि महेशादन्यः कश्चित् तस्य वेत्ता नाऽऽस्ते, तत् कुतस्तवास्य ज्ञातृत्वम्? इत्यत आह, तस्मादिति।—धाता ब्रह्मा, तस्मात् महेशात्, अध्यैष्ट पठितवान्, वैद्यकमिति शेषः; तमेव गुरुत्वेन निर्णीय तज्ज्ञानं लेभे इत्यर्थः। तुराषाट्

### नाड़ीनां संख्या मूलस्थानञ्च।

## सार्द्धत्रिकोट्यो नाड्यो हि स्थूलाः सूक्ष्माश्च देहिनाम्।

---

इन्द्रः, तस्मात् ब्रह्मणः, अध्येष्ट, ब्रह्मैव इन्द्रस्य गुरुरित्यर्थः। अहन्तु तस्मात् तुरासाहः सकाशात्, ज्ञात्वा विदित्वा, शास्त्रम् इदं नाड़ीविज्ञानरूपं वैद्यकाख्यं, वक्तुम् अर्हामि शक्नोमि इत्यर्थः। इन्द्रस्य त्रिलोकपालत्वात् मर्त्यलोके तत्प्रचारणं युक्तमेव; तच्च चरके दीर्घञ्जीवितीयाध्याये—"दीर्घञ्जीवितमन्विच्छन् भरद्वाज उपागमत्। इन्द्रमुग्रतपा बुद्ध्वा शरण्यममरेश्वरम्"॥ तथा सुश्रुतेऽपि वेदोत्पत्तिनामाध्याये—"ब्रह्मा प्रोवाच, ततः प्रजापतिरधिजगे, तस्मादश्विनौ, अश्विभ्यामिन्द्रः, इन्द्रादहं, मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः" इत्यादिना व्यक्तीकृतम्॥ २॥

एवं ग्रन्थस्य लोकैर्ग्राह्यत्वं स्थापयित्वा इदानीं नाड़ीचक्रं प्रकटयितुं नाड़ीनां समुदिताः संख्याः, मूलस्थानानि, अवस्थानप्रकारांश्चाह, सार्द्धेति।—देहिनां प्राणिनां, देहेषु इति शेषः, स्थूलाः अतनवः, परिणतावयवाः इत्यर्थः, सूक्ष्माः प्रतनवश्च, स्थूलनाड़ीभ्यः समन्तान्निःसृताः शाखादिरूपा इत्यर्थः, तथा च सुश्रुतः,—"द्रुमपत्रसेवनीनामिव च तासां प्रतानाः" इति। सार्द्धत्रिकोट्यः अर्द्धकोट्या सह त्रिकोट्यः, अर्द्धकोट्यधिककोटित्रयसंख्यकाः इत्यर्थः, (अत्र अभ्यासवृत्तौ बहुवचनम्। यत्तु विंशत्यादेरेकत्वं, तदनभ्यासवृत्तौ इति बोध्यम्।) अत्र तावदेतदवश्यमेव ज्ञातव्यं यत्, नाड़ीनां सार्द्धत्रिकोटित्वं शिरास्नायुधमनीस्रोतःसमुदायाणां सामान्यतः नाड़ीशब्देनाभिहितानां मिलितानां संख्याऽभिप्रायेणोक्तं, यतः "सप्त शिराशतानि भवन्ति" इत्युक्त्वा सुश्रुतेन "द्रुमपत्रसेवनीनामिव च तासां प्रतानाः" इति शिरावर्णनविभक्तिनामशारीरे, तथा धमनीव्याकरणशारीरे च "तिर्य्यग्गाणान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते, तास्त्वसंख्येयाः" इत्यनेन तत् प्रतिपादितं, न तु केवलं शिराणां धमनीनां वा संख्यास्तावत्य इति। यत्तु

नाभिकन्दनिबद्धास्तास्तिर्य्यगूर्द्ध्वमधः स्थिताः ॥ ३ ॥

पुनस्तेन सार्द्धत्रिकोटित्वं नाड़ीनां कण्ठोक्त्या नाभिहितं, तत्तु शाखा-प्रशाखादिभेदभिन्नानामसंख्यातानां तासां शारीरतन्त्रेषु वैशिष्ट्येनोपयोगित्वाभावात्। किञ्च "सार्द्धलक्षत्रयं नाड्यः सन्ति देहान्तरे नृणाम्" इति शिवसंहितावचनमपि आपेक्षिकप्राधान्येनोक्तमिति ज्ञातव्यम्। अन्यच्च, "तिस्रः कोट्यर्द्धकोटी च यानि लोमानि मानवे" इति पाराशरीयेण रोम्णां सार्द्धत्रिकोटित्ववचनेन रोमकूपाणामपि सार्द्धकोटीत्रयसंख्यावत्त्वलाभात्, "तासां मुखानि रोमकूपप्रतिबद्धानि" इति सौश्रुतधमनीव्याकरणशारीरवचनेन रोमकूपप्रतिबद्धमुखानां नाड़ीनामपि तावत्संख्यकत्वं लभ्यते, इत्येवाभिप्रेत्यात्र "सार्द्धत्रिकोट्यो नाड्यो हि" इत्याद्युक्तं मुनिप्रवरेणास्मिन् ग्रन्थे इति। ननु सुश्रुते "तत्र केचिदाहुः शिराधमनीस्रोतसामविभागः, शिराविकारा एव धमन्यः स्रोतांसि चेति। तत्तु न सम्यक्, अन्या एव हि धमन्यः स्रोतांसि च शिराभ्यः; कस्मात्? व्यञ्जनान्यत्वात्, मूलसन्नियमात् कर्म्मवैशेष्यादागमाच्च। केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्मसु भवति" इत्यादिना, तथा "शिराणाञ्च मृदुः पाकः स्नायनाञ्च खरस्तथा" इत्यादिना ग्रन्थेन शिरास्नायुधमनीस्रोतसां पृथक्त्वं प्रदर्शितं, तत् कथमत्र सामान्येन नाड़ीसंख्याः प्रदर्शिता ग्रन्थकृता? उच्यते,—रोगनिर्णयाय साध्यासाध्यविज्ञानाय च नाड़ीपरीक्षाकर्म्मणि तथाविधस्य ज्ञानस्य उपयोगित्वाभावादत्र विस्तरो नोक्तः। नाड्यो हि, सन्ति इति शेषः। ता नाड्यः, नाभिः कन्दः मूलं, मूलाधार इति यावत्, उक्तञ्च सूक्ष्मस्वरोदये—"कन्दो मूलाधारः" इति; तथा गारुड़स्वरोदयेऽपि—"नाभेरधस्तात् यः कन्दः प्रतानास्तत्र निर्गताः" इति। स इव, नाभिरेव कन्दमिति वा, तस्मिन् नाभिकन्दे नाभिमूले, निबद्धाः संसक्ताः, दृढ़लग्ना इति यावत्, अथवा—नाभौ कन्दं मूलं निबद्धं यासां तादृश्यः, ताः नाड्यः, तिर्य्यग्भावेन वक्रभावेण ऊर्द्ध-

आकृतिभेदेन कर्म्मभेदेन च नामभेदः ।

द्वासप्ततिसहस्रन्तु तासां स्थूलाः प्रकीर्त्तिताः ।
देहे धमन्यो धन्यास्ताः पञ्चेन्द्रियगुणावहाः ॥ ४ ॥

---

भावेन अधोभावेन च स्थिता विन्यस्ताः ; तदुक्तम् आचार्य्यसुश्रुतेन,—
"तासां नाभिर्मूलं, ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च ।
यावत्यस्तु शिराः काये सम्भवन्ति शरीरिणाम् ।
नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः ॥" इति ॥ ३ ॥

अथ स्थूलसूक्ष्मभेदेन द्विविधासु तासु स्थूलानां संख्याप्रदर्शनपुरःसरं नामविशेषं कर्मविशेषञ्चाह, द्वासप्ततीति ।—तस्याः सार्द्धत्रिकोटीनां नाड़ीनां मध्ये, द्व्यधिका सप्ततिः द्वासप्ततिः, तासां सहस्रं द्वासप्ततिसहस्रम्, (अत्र अनभ्यासवृत्तौ एकत्वम्, अभ्यासवृत्तौ तु बहुवचनम् अशक्यनिवारणं स्यादेव) द्वासप्ततिसहस्रसंख्यका नाड्यः, स्थूला महत्तराः, परिणताऽवयवा इति यावत्, प्रकीर्त्तिताः कथिताः । देहे शरीरे, पञ्चेन्द्रियाणां चक्षुःकर्णनासिकाजिह्वात्वचां, ये गुणा रूपशब्दगन्धरसस्पर्शाः, तान् आवहन्तीति पञ्चेन्द्रियगुणावहाः इन्द्रियपञ्चकस्य रूपरसादिग्रहणरूपस्वस्वकर्म्मसम्पादनकारिण्यः, यदुक्तं सुश्रुतेन धमनीव्याकरणशारीरे,—
"तासान्तु नाभिप्रभवाणां धमनीनामूर्द्ध्वगा दश, दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः । ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुधितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति, तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते, तास्त्रिंशत् । तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतः, ता दश । शब्दरूपरसगन्धान् अष्टाभिर्गृह्णीते । द्वाभ्यां भाषते च, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते, द्वे चाश्रुवाहिन्यौ, द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते, ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः, तास्त्वेताः त्रिंशत् सविभागा व्याख्याताः" इति ।
एवमधोगा अपि आमपक्काशयान्तरे त्रिधा सत्यः त्रिंशत्संख्यकत्वं, तथा तिर्य्यग्गाश्च प्रत्येकशः शतसहस्रसंख्यात्वं भजन्ते, तत्तु विस्तृति

तासाञ्च सूक्ष्मशुषिराणि शतानि सप्त
स्युस्तानि यैरसकृदन्नरसं वहद्भिः।

---

भयात् नात्र प्रदर्शितम्, आकरे द्रष्टव्यम्। अत एव धन्याः प्रधानाः, पञ्चेन्द्रियगुणानां यथायथं सम्पादकत्वेन धनार्जनहेतुभूताः इत्यर्थो वा, ताः द्वासप्ततिसहस्रसंख्यकाः नाड्यः; यत्तु केनचित् "ता अष्टाविंत्यर्थः" इत्युक्तं, तन्नातिसङ्गतं सुश्रुतविरोधात्; तत्र हि, हृदयमभिप्रपद्य प्रत्येकशः त्रिधा भिन्नत्वेन त्रिंशत्संख्यकत्वमुपागतानाम् ऊर्द्ध्वगानां दशानां धमनीनां मध्ये "शब्दरूपरसगन्धानष्टाभिर्गृह्णीते" इति वचनेन ऊर्द्ध्वगानां त्रिंशताम् अष्टौ धमन्यः चतुर्णामिन्द्रियाणां शब्दादीन् गुणान् गृह्णन्ति, न तु पञ्चानाम्; अतः "ताः" इत्यनेन द्वासप्ततिसहस्रमेव ग्रन्थकर्त्तुरभिप्रेतं सङ्गच्छते इति। धमन्यः, इति कथिता इति शेषः। यत्तु सुश्रुतेन—"चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः" इत्यनेन धमनीनां चतुर्विंशतिसंख्यकत्वमभिहितं, तत्तु स्थूलाः धमनीरभिलक्ष्योक्त्येति ज्ञातव्यम्। स्वयमेव वक्ष्यति चाग्रे—"शतसप्तानां मध्ये चतुरधिका विंशतिः स्फुटास्तासाम्" इत्यादिना ग्रन्थेन। धमनीनामसंख्येयत्वञ्च प्रागेव प्रदर्शितम्॥ ४॥

अथ तासां मध्ये कासाञ्चित् कर्म्मविशेषात् संज्ञान्तरं विवक्षुः भिन्नसंज्ञकानां तासां संख्याः, स्वरूपं, कर्म्मविशेषञ्चाह, तासामिति।— तासां द्वासप्ततिसहस्राणां स्थूलानां धमनीनां मध्ये तानि सुश्रुतोक्तानीत्यर्थः, सप्तशतानि सप्त शिराशतानीत्यर्थः, अग्रे "शिराशतसप्तकेन" इति वक्ष्यमाणत्वात् "सप्त शिराशतानि भवन्ति" इति सुश्रुतसंवादाच्च; सूक्ष्माणि अणूनि, शुषिराणि रन्ध्राणि येषां तानि तथाविधानि सूक्ष्मशुषिराणि तनुच्छिद्रविशिष्टानि, स्युर्भवेयुः, ("स्युस्तानि" इत्यत्र क्वचित् पुस्तके "स्वच्छानि" क्वचिच्च "स्वस्थानि" इति पाठान्तरं दृश्यते।) असकृत् निरन्तरम्, अन्नरसं भुक्तद्रव्यपरिणामजं रसं, वहद्भिः कृत्स्नदेहं प्रापयद्भिः, यैः सूक्ष्मशुषिरैः शिराशतसप्तकैः, अमीषां नृणाम्

आप्याय्यते वपुरिदं हि नृणाममीषाम्
अम्भः स्रवद्भिरिव सिन्धुशतैः समुद्रः ॥ ५ ॥
आ पादतः प्रततगात्रमशेषमेषाम्
आ मस्तकादपि च नाभिपुरःस्थितेन ।

---

इदं वपुः शरीरम्, अम्भः जलं, स्रवद्भिः चरद्भिः, वहद्भिरित्यर्थः, सिन्धुशतैः सिन्धूनां नदीनां शतैः, यद्वा—सिन्धवश्च सिन्धवश्च इति एकशेषे सिन्धवः नदाः नद्यश्च ("सिन्धुः समुद्रे नद्याञ्च नदे देशभिदानयोः" इति विश्वः ।) तत्कृतैः नदनदीसमूहैः, समुद्र इव आप्याय्यते सन्तृप्यते, प्रवर्द्धते इत्यर्थः, अन्नरसं प्राप्येति शेषः । ननु यद्यपि सुश्रुतेन शिरावर्णनविभक्तिनामशारीरे—"तासां मूलशिराश्चत्वारिंशत्, तासां वातवाहिन्यो दश, पित्तवाहिन्यो दश, कफवाहिन्यो दश, दश रक्तवाहिन्यः" इति ग्रन्थेन शिराणां वातादिवाहित्वं, तथा धमनीव्याकरणशारीरे—"तास्तु पित्ताशयमभिप्रपन्नास्तत्स्थमेवान्नपानरसं विपक्वमौष्ण्यात् विरेचयन्त्यः अभिवहन्त्यः शरीरं तर्पयन्ति" इत्यनेन च ग्रन्थेन अन्नरसवाहित्वं धमनीनां कर्म्मत्वेन प्रदर्शितं, तथाऽपि शिरावर्णनविभक्तिनामशारीरे एव "याभिरिदं शरीरमाराम इव जलहारिणीभिः, केदार इव च कुल्याभिः उपस्निह्यते" इत्यादिग्रन्थोक्तदृष्टान्तबलात् तासामन्नरसवहनकर्म्मापि प्रतीयते । यत्तु वातादिवाहित्वं सुस्पष्टमुक्तं, तत्तु मुख्यकर्म्मकारित्वाभिप्रायेण इति । वसन्ततिलकं वृत्तं, "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात् ॥ ५ ॥

कुत्र कीदृक्तया ता अवतिष्ठन्ते, इत्याह, आ पादत इति ।—इह पृथिव्याम्, एषां नृणाम् आ पादतः आ चरणात्, आ मस्तकात् मस्तकपर्य्यन्तम् (उभयत्रापि "आङ् मर्य्यादावचने" इति पञ्चम्यास्तसिल्, अभिविधिश्चाङोऽर्थः ।) अशेषमपि कृत्स्नमेव (अपिरेवार्थे) एतत् परिदृश्यमानं, कायं (नपुंसकत्वमभिधानात्) देहं, नाभिपुरःस्थितेन

एतन्मृदङ्ग इव चर्मचयेन नद्धं
कायं नृणामिह शिराशतसप्तकेन ॥ ६ ॥

परोक्षणीया नाड़ी।

शतसप्तानां मध्ये
चतुरधिका विंशतिः स्फुटास्तासाम्।

नाभिसम्मुखवर्त्तिना, निर्विसर्गपाठस्तु साधुः, तत्र—नाभिरेव पूः नाभिपुरं (समासान्तः अः) तत्र स्थितेन, यद्वा—नाभौ पुरः अग्रे, प्रथमावस्थायामित्यर्थः, ("पुरोऽधिकमुपर्य्यग्राणि" इत्यमरः) स्थितेन, अग्रे नाभिकन्दमधिष्ठाय ततः तिर्य्यगूर्द्धाधोभावेन सर्वगात्रं व्याप्नुवता इत्यर्थः, "नाभिकन्दनिबद्धास्ताः तिर्य्यगूर्द्ध्वमधः स्थिताः" इत्युक्तेः, शिराशतसप्तकेन सप्तशतनाड्या इत्यर्थः, चर्मचयेन चर्मसमूहेन, चर्ममयरज्ज्वा इत्यर्थः, नद्ध इति शेषः, मृदङ्ग इव वाद्ययन्त्रविशेषः इव, "चर्म्मणा नद्धवदनो मध्ये चैव पृथुर्भवेत्। मृत्तिकानिर्मितश्चैष मृदङ्गः परिकीर्त्तितः" ॥ इति लक्षणात्; प्रततं विस्तृतं, प्रसारितमित्यर्थः, गात्रं शरीरं यस्मिन् तत् प्रततगात्रं प्रसारितदेहं यथा तथा, यादृशबन्धनेन देहं प्रसारितं तिष्ठति, न तु सङ्कोचादिविकृतिं प्राप्नोति, तादृशभावेनेत्यर्थः, कुपिता हि शिराः आकुञ्चनादिकं प्राप्य नानाविधविकृतिं जनयन्ति देहस्य। यद्वा—प्रततं व्याप्तं, संसक्तमिति यावत्, गात्रम् अङ्गं, हस्तपादाद्यवयवमित्यर्थः, ("गात्रं गजाग्रजङ्घादिभागेऽप्यङ्गे कलेवरे" इति मेदिनी) यस्मिन् तत् प्रततगात्रं, कायमित्यस्य विशेषणं, हस्तपादाद्यवयवसहितं निखिलमपि शरीरमित्यर्थः, यद्वा—प्रततं गात्रं सर्वगात्रं, व्याप्येति शेषः, नद्धं बद्धम्, अस्तीति शेषः। तदुक्तं सुश्रुतेन शिरावर्णनविभक्तिनामशारीरे—"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः शिराः। प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम् ॥" इति। वृत्तं पूर्ववत् ॥ ६ ॥

आसां का परीक्षणीया? इत्याह, शतसप्तानामिति।—शतसप्तानां

**एका परीक्षणीया**
**या दक्षिणकरचरणविन्यस्ता ॥ ७ ॥**

नाड़ीनां मध्ये चतुरधिका विंशतिः चतुर्विंशतिः, नाड्यः इति शेषः, एतत्तु धमन्यभिप्रायेणोक्तं, धमनीनामेव मुख्यतया चतुर्विंशतिसंख्यकत्वात्, यदुक्तं सौश्रुतधमनीव्याकरणशारीरे—"चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः" इति। स्फुटा व्यक्ताः, तिष्ठन्तीति शेषः, तासां चतुरधिकविंशतीनां मध्ये, या एका, "एकैव" इति "पाणिपादमध्यविन्यासात् तासामेकैव परीक्षणीया" इति च पाठान्तरम्। नाड़ी परीक्षणीया ; सा इति यच्छब्दबलात् आयाति, यत्तदोर्नित्यसम्बन्धात्। सा का ? इत्याह, येति।—या दक्षिणकरचरणविन्यस्ता दक्षिणकरादारभ्य दक्षिणचरणपर्य्यन्तं विन्यस्ता सन्निविष्टा इति बोद्धव्या। "या करचरणविन्यस्ता" इति पाठान्तरम्। दक्षिणशब्देनात्र प्राधान्यात् पुरुषस्य इत्यवगन्तव्यम् ; स्त्रियास्तु वामकरेत्याद्यर्थादेवायाति। तदुक्तं दत्तात्रेयेण—

"वामभागे स्त्रिया योज्या नाड़ी पुंसस्तु दक्षिणे।
इति प्रोक्तं मया देवि ! सर्वदेहेषु देहिनाम् ॥"

अस्यार्थः।—स्त्रिया वामभागे, पुंसस्तु दक्षिणभागे नाड़ी योज्या परीक्षणीयत्वेन ग्राह्या इत्यर्थः। स्त्रीपुंसयोरेवं परीक्षाभेदस्तु—"तिर्य्यक्कूर्म्मो देहिनां नाभिदेशे" इत्यादि वक्ष्यमाणश्लोकप्रदर्शितकूर्म्मावस्थितिभेदेनैवावगन्तव्यः ; तथा चोक्तं दत्तात्रेयेण—"स्त्रीणामूर्द्ध्वमुखः कूर्म्मः पुंसां पुनरधोमुखः। अतः कूर्म्मव्यतिक्रान्तात् सर्व्वत्रैव व्यतिक्रमः ॥ लक्ष्यते दक्षिणे पुंसां या च नाड़ी विचक्षणैः। कूर्म्मभेदेन वामानां वामे सैवावलोक्यते ॥" इति। नपुंसकस्य तु स्त्रीपुंसयोरन्यतराकारप्रकाशमपेक्ष्य परीक्षा कार्य्या। यदि स्त्रीनपुंसकं भवेत्, तदा वामे, पुंनपुंसकश्चेत् दक्षिणे परीक्षा कर्त्तव्या इत्यर्थः। केचित्तु—"सव्ये च नाड़ी क्लीवानामिति कृत्वा समाचरेत्" इति पठन्ति। साम्ये किं

तिर्य्यक्कूर्म्मो देहिनां नाभिदेशे
वामे वक्त्रं तस्य पुच्छन्तु याम्ये।

---

स्यात्? साम्यन्तु न स्यात्। कृत्रिमस्य नपुंसकस्य तु (खोजा) प्रकृतिमास्थाय परीक्षा कार्य्येति विशेषः। चरणस्य कस्मिन् स्थाने नाड़ी परीक्षणीया? अत्र अभिज्ञानामुपदेशः कथ्यते।—दक्षिण-पादस्य वामग्रन्थिपश्चात्पार्श्वगता, वामस्य तु पादस्य दक्षिणग्रन्थि-पश्चात्पार्श्वगता नाड़ी परीक्ष्या। तेन पादस्थानात्मपपश्चिम्यो नाड़ीभ्यः इयं नाड़ी पृथक्। करस्था तु कथयिष्यते, करगतनाड़ी-परीक्षणन्तु प्रायिकत्वेन सर्व्वैरेव विशेषेण प्रदर्शितम्; स्थानान्तरस्था अन्या अपि धमन्यः कतिपयाः परीक्षणीयाः। तथा च—"नाड्योऽष्टौ पाणिपात्कण्ठ नासोपान्तेषु याः स्थिताः। तासु जीवस्य सञ्चारं प्रयत्नेन निबोधयेत्॥ आगन्तुकं ज्वरं तृष्णाम् आयामं मैद्दनक्रमम्। भयं शोकञ्च कोपञ्च कण्ठनाड़ी निदर्शयेत्॥ मरणं जीवनं कामं कण्ठरोगं शिरोरुजाम्। श्रवणाऽऽननजान् रोगान् नासानाड़ी निदर्शयेत्"॥ इति। अन्तिमचरणे आतुरावस्थादिकमवेक्ष्य पाणिपादादिषु स्थितेभ्यो नाड्यष्टकेभ्यः स्थानान्तरस्था अन्या अपि कति नाड्यः परीक्ष्याः, तथा च अन्ये—"पाणिपात्कण्ठनासाक्षिकर्णजिह्वान्तमेढ्रगाः। वाम-दक्षिणतो लक्ष्याः षोड़श प्राणबोधने॥" इत्याहुः। अतः "सव्येन" इत्यादिना वक्ष्यमाणप्रकारेण रोगधारणार्थं वातादीनां गतिज्ञानार्थञ्च लक्षणीया नाड्य इति दिक्। आर्य्या वृत्तम्॥ ७॥

"चतुरधिका विंशतिः स्फुटाः" इति यदुक्तं, तदेव विवरीतुं तासा-मवस्थानप्रकारं द्वाभ्यामाह, तिर्य्यगिति।—देहिनां प्राणिनां, नाभि-देशे नाभिस्थले, तिर्य्यक् वक्रभावेण, वामपार्श्वतो दक्षिणपार्श्वावधि स्त्रीणामूर्द्ध्वमुखं पुंसाञ्च अधोमुखं शायितभावेनेत्यर्थः, "स्त्रीणामूर्द्ध्वमुखः कूर्म्मः पुंसां पुनरधोमुखः" इति दत्तात्रेयानुशासनात् कूर्म्मः कच्छपः, शिरामय इति यावत्, "शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः" इति

ऊर्द्ध्वे भागे हस्तपादौ च वामौ
तस्याधस्तात् संस्थितौ दक्षिणौ तौ ॥ ८ ॥
वक्त्रे नाड़ीद्वयं तस्य पुच्छे नाड़ीद्वयं तथा।
पञ्च पञ्च करे पादे वामदक्षिणभागयोः ॥ ९ ॥
वातं पित्तं कफं द्वन्द्वं सन्निपातं रसं त्वसृक्।
साध्यासाध्यविवेकञ्च सर्वं नाड़ी प्रकाशयेत् ॥१०॥

---

सुश्रुतदर्शनात्; तद्वदवयवविशिष्टं नाड़ीचक्रम्, अस्तीति शेषः, तस्य कूर्मावयवविशिष्टस्य नाड़ीचक्रस्य, वक्त्रं मुखं, वामे वामपार्श्वे, नाभेरिति शेषः, याम्ये दक्षिणपार्श्वे, अत्रापि नाभेरेवेति शेषः बोद्धव्यः, पुच्छं लाङ्गूलमिति, ऊर्द्ध्वे भागे नाभेरूर्द्ध्वदेशे, वामौ हस्तपादौ, एतत्तु ऊर्द्ध्वमुखकूर्मस्य हृदयाभिमुखम् अधोमुखकूर्मस्य पृष्ठाभिमुखमित्यवगन्तव्यम्, (समासविधेरनित्यत्वात् प्राण्यङ्गत्वेऽपि एकवद्भावाभावः; एवं सर्वत्र।) तस्य कूर्मस्य, दक्षिणौ तौ हस्तपादौ, अधस्तात् नाभेः निम्नभागे, एतत्तु ऊर्द्ध्वमुखस्य पृष्ठाभिमुखमधोमुखस्य हृदयाभिमुखमवगन्तव्यम्; संस्थितौ। शालिनी वृत्तं, "मात् तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात् ॥८॥

वक्त्र इति।—तस्य कूर्मस्य, वक्त्रे मुखे, नाड़ीद्वयं, तथा पुच्छे लाङ्गूले च, नाड़ीद्वयं; वामदक्षिणभागयोः करे हस्ते, पादे चरणे च, वामे करे पादे दक्षिणे करे पादे चेत्यर्थः, पञ्च पञ्च संख्यया, एवं समुदायेन चतुर्विंशतिः इति बोद्धव्यम्; नाड्यः सन्ति इति शेषः ॥ ९ ॥

वातादिषु दोषेषु रसादिषु धातुषु तथा विविधाहाराचारादिषु च रोगहेतुषु कतमं हेतुमाश्रित्य व्याधिर्जातः इति संशयनिवारणं नाड़ीपरीक्षाद्वारैव भवतीत्याह वातमिति।—वातं पित्तं कफं पृथक् पृथक् वातादिदोषत्रयम्, एषां क्षयस्थानवृद्धिरूपं गतित्रयमिति यावत्, एवमुत्तरत्रापि सर्वत्रावगन्तव्यम्; द्वन्द्वं द्विदोषं, वातपित्तं वातकफं कफपित्तञ्च,

सव्येन रोगधृतिकूर्परभागभाजा-
ऽऽपीड्याथ दक्षिणकराङ्गुलिकात्रयेण ।

---

सन्निपातं त्रिदोषं, मिलितवातपित्तकफमित्यर्थः, रसं रसाधिक्यम्, असृक् रक्तं, रक्ताधिक्यमित्यर्थः, तुशब्दात् कामक्रोधादिरूपमागन्तुहेतुं मांसक्षीरगुड़ाद्याहाररूपं हेत्वन्तरञ्च, ("रसं त्वसृक्" इत्यत्र "तथैव च" इति पाठान्तरम् ।) साध्यासाध्यविवेकञ्च, चकारोऽत्र समुच्चये, तेन, एतत् सर्वं, तथा ; एतत्कृतविकाराणां साध्यासाध्यविवेकञ्च सन्निपातस्य प्रायेणासाध्यत्वात् अत्र सन्निपातग्रहणं कृत्वाऽपि पुनः साध्यासाध्यविवेकमिति ग्रहणेन सामान्यतः सन्निपातजमिति, सन्निपातशब्देन तथा विशेषतः साध्यमसाध्यं वा इति साध्यासाध्यपदेन बोधयति, सर्वम् उक्तमेतत्, उक्तादन्यञ्च गुल्मक्षयाजीर्णग्रहण्यादिरोगसमूहमित्यर्थः, नाड़ी प्रकाशयेत् प्रबोधयेत् ॥ १० ॥

"एका परीक्षणीया या दक्षिणकरचरणविन्यस्ता" इत्युक्तं, तत्र करस्य कुत्र कथं वा सा परीक्षणीया ? इत्याह, सव्येनेति ।—रोगधृतिकूर्परभागभाजा, रोगस्य गदस्य धृतिर्धारणं ज्ञानमिति यावत् यत्र, रोगज्ञानाय मणिबन्धस्थनाड़ीपरीक्षणात् प्रागेव तत्रस्थायाः नाड्या आपीड़नात् तस्य तथात्वम्, एतेन पीड़नहेतुरप्युक्तः, स चासौ कूर्परः कफोणिः, बाहुप्रकोष्ठयोर्मध्यस्थग्रन्थिविशेष इति यावत्, रोगधृतिकूर्परस्तस्य भागः अंशविशेषः, स च भागः प्रसारितोत्तानीकृतस्य आतुरदक्षिणहस्तस्य यत्र नाड़ी पोस्फुर्यते, तं भजते इति रोगधृतिकूर्परभागभाक्, तेन रोगधृतिकूर्परभागभाजा ; यद्वा—रोगाणां धृत्यै धारणाय, यथायथं निर्णयायेत्यर्थः, कूर्परभागभाजा कफोणिदेशस्थितेन, सव्येन वामेन, करेणेति शेषः, आपीडा पीड़यित्वा, कूर्परस्थां नाड़ीमिति शेषः, आपीडा इति ल्यपा आपीड़नस्य दीर्घकालस्थायित्वाभावो बोद्धव्यः, किन्तु परीक्षाकालेऽपि तत्रैव हस्तस्थापनमावश्यकमिति

**अङ्गुष्ठमूलमधि पश्चिमभागमध्ये**
**नाड़ीं प्रभञ्जनगतिं सततं परीक्षेत् ॥११॥**

---

सूच्यते। आतुरस्य दक्षिणहस्तकूर्पराधःप्रदेशे स्वकीयवामहस्तं दत्त्वा तन्मध्यगतनाड़ीं किञ्चित् पीड़यित्वा, "रोगाणां वातादिपिशुनवायूनां धारणं यथा स्यात् तथा आपीडा" इति कश्चित्। अत्र "साचिक्षति" इति प्राचीनसम्प्रदायधृतपाठान्तरं साधु; अस्मिन् पक्षे साचि वक्रभावेण क्षतिः धारणम्, अवस्थापनमित्यर्थः, यस्य तादृशः यः कूर्परः इत्येवं योजनीयः, एतेन किञ्चित्तिर्य्यग्भावेन करस्थापनमवबुध्यते, तथात्वे परीक्षायाः सौकर्य्यं भवति, इदानीमपि आतुरस्य नाड़ीपरीक्षा-काले तथैव तद्धस्तधारणं व्यवहारप्रसिद्धम्। एतच्चापीड़नं दोषाणां पौर्व्वापर्य्यबोधार्थम्। अथेत्यापीड़नानन्तरं परीक्षा, न तु परीक्षा-कालेऽपि आपीड़नस्थितिः, इति अथशब्देन द्योत्यते। दक्षिणकरस्य अङ्गुलिकात्रयेण दक्षिणेति प्रायिकं, स्वपरीक्षायामन्यथादर्शनात्, त्रयेणेति योग्यतया तर्ज्जनीमध्यमाऽनामिकानां ग्रहणम्। वैद्यः निज-दक्षिणहस्तस्य तर्ज्जनीमध्यमाऽनामिकाङ्गुलिकात्रयेणेत्यर्थः, अङ्गुष्ठस्य मूलं क्षुद्रग्रन्थिप्रान्तभागम् अधि अधिकृत्य, आरभ्येत्यर्थः, पश्चिमभागमध्ये पश्चिमः पश्चाद्वर्त्ती यो भागः अंशः अङ्गुष्ठस्याधोभाग इत्यर्थः, तस्य मध्ये मध्यस्थाने, अङ्गुलिद्वयपरिमितमूले इत्यर्थः। प्रकोष्ठान्ते मणिबन्धेऽङ्गुलि-द्वयपरिमितेस्थाने इत्यर्थः, वक्ष्यते च—"अङ्गुष्ठस्य तु मूले या सा नाड़ी जीवसाक्षिणी। तस्या गतिवशाद्विद्यात् सुखं दुःखञ्च रोगिणाम् ॥" इति। तथा अन्यत्राप्युक्तं—"हस्तयोश्च प्रकोष्ठान्ते मणिबन्धेऽङ्गुली-द्वयम्। पादयोर्नाड़िकास्थानं गुल्फस्याधोऽङ्गुलिद्वयम् ॥ कर्णमूलेऽङ्गुलि-द्वन्द्वं नासामूलेऽङ्गुलिद्वयम्। एतमप्यङ्गुलिद्वन्द्वमग्रतः कर्णरन्ध्रयोः ॥" इति। अत्राङ्गुलिशब्देन सकणिशः ( सशूकः ) एकयवः। उक्तञ्च—"सकणिश-यव एकस्तत्प्रमाणाऽङ्गुलिः स्यात् तदुभयमितसद्मन्येव नाड़ीप्रचारः। न भवति यदि तस्मिन् गेहिनी गेहमध्ये कथमिव गृहमेधी तत्र

परीक्षायाः कालरीती।

प्रातः कृतसमाचारः कृताचारपरिग्रहम्।
सुखासीनः सुखासीनं परीक्षार्थमुपाचरेत् ॥१२॥

---

जीवस्तदा स्यात् ॥ ?" इति। केचित् तु अङ्गुष्ठमूलमिति आपीडा इति क्रियायाः कर्मपदमिति वदन्ति, तदसत्, अङ्गुष्ठमूलपीड़नेन नाड़ीगतिज्ञानासम्भवात्। प्रभञ्जनगतिं प्रभञ्जनस्य वायोर्गतिः गमनं स्पन्दनमित्यर्थः यत्र तां, यद्वा—प्रभञ्जनेन गतिः यस्याः तां तादृशीम्, एतेनैवं बोधयति—यत् पित्तश्लेष्मणोः गतिशक्त्यभावात् वायुगतिमत्त्वम्, अत एव परीक्षणे नाडान्तरनिरासः, उक्तञ्च—"पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत् ॥" इति। वातप्रेरितयोर्गतिर्नान्यथेत्यर्थः। नाड़ीं सततमिति सुस्थदशायामपि, तच्च उत्तरकाले रोगनिर्णयसौकर्य्यार्थं, यदुक्तं—"भाविरोगावबोधाय सुस्थनाड़ीपरीक्षणम्"। अन्यत्राप्युक्तं—"स्पर्शनादिभिरभ्यासात् नाड़ीज्ञो जायते भिषक्। तस्मात् परामृशेत् नाड़ीं स्वस्थानामपि देहिनाम् ॥" परीक्षेत्—स्पर्शनाऽऽदिना बुध्येतेत्यर्थः, वैद्य इति शेषः। परीक्षाप्रकारश्चात्रानुक्तः दर्श्यते तन्त्रान्तरात्, तथा च—"स्पर्शनात् पीड़नात् घातात् वेधनात् मर्दनादपि। तासु जीवस्य सञ्चारं प्रयत्नेन विशोधयेत् ॥" इति। अत्र अपिशब्दः स्वेदात् दाहाच्च इत्यर्थं बोधयति। अन्यत्राप्युक्तं—"दर्शनात् स्पर्शनात् प्रश्नात् परीक्षा त्रिविधा मता। वयोवर्णशरीराणामिन्द्रियाणाञ्च दर्शनात् ॥" "नाड़ी प्रभञ्जनगतिः सततं परीक्ष्या" इति पाठान्तरम्। वसन्ततिलकं वृत्तम् ॥ ११ ॥

परीक्षाकालमाह, प्रातरिति।—प्रातः प्रातःकाले, अत्र प्रातरिति पदं प्रायिकत्वाभिप्रायेण प्रशस्ततया चोक्तं, स्वस्थस्यापि मध्याह्ने उष्णतायाः सायाह्ने धावमानतायाश्च उल्लेखदर्शनात् कदाचित् ज्वरभ्रान्तिः स्यात् इति शङ्कापरिहाराय तथा रात्रिकालिकविश्रामेण उभयोरेव मनसोः प्रसन्नतया नाड्याश्च स्निग्धमयत्वात् प्रातरेव परीक्षायाः उचितः

तैलाभ्यङ्गे च सुप्ते च तथा च भोजनान्तरे।
तथा न ज्ञायते नाड़ी यथा दुर्गतमा नदी ॥१३॥

---

काल इति। कृतसमाचारः कृतः सम्पन्नः समाचारः सम्यक्प्रकारेण शौचाचमनादिप्रातःकृत्यं येन तथोक्तः, सुखासीनः परीक्षार्थिनः समीपे सुखोपविष्टः, न तु ऊर्द्ध्वजान्वादिभावेनोपविष्टः सोद्वेगो वा, भिषक् इति शेषः, कृताऽऽचारपरिग्रहं कृतः सम्पन्नः आचारस्य मलोत्सर्गादिरूपप्राभातिकनित्यानुष्ठानस्य परिग्रहः स्वीकारः येन तथोक्तं, सुखासीनं सुखोपविष्टम् उल्लिखितदिशा भिषक्सविधे समासीनं, नाड़ीपरीक्षार्थिनमिति शेषः, परीक्षार्थं वातपित्तकफानां न्यूनाऽऽधिक्य-साम्यविवेचनार्थम्, उपाचरेत् संस्पृशेत् ॥ १२ ॥

परीक्षायामनुपयोगिकालमाह, तैलाभ्यङ्ग इति।—तैलाभ्यङ्गे तैलशब्दोऽत्र स्नेहमात्रमुपलक्षयति, "तिलादिस्निग्धवस्तूनां स्नेहस्तैल-मुदाहृतम्" इति भावप्रकाशात् यथा सार्षपादिस्नेहे स्नेहशब्दव्यवहारः, तथा स्निग्धत्वगुणसाधर्म्यात् घृतवसामज्जस्वपि, अतः सर्वस्नेहपरोऽत्र तैलशब्दः, तेनाभ्यङ्गे म्रक्षणे घृततैलवसाऽऽदिमर्दने, अत्र तु अभ्यङ्गशब्दः सामान्यतया सर्वाङ्गेषु नित्यमर्दनार्थे लक्षितः, न तु "मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम्। स्रोतोभिस्तर्पयेत् बाह्य स चाभ्यङ्ग उदाहृतः॥" इति विशेषाभ्यङ्गार्थे। सुप्ते निद्राकाले, "सुप्ते" इत्यत्र "स्वप्ने" तथा "प्रसुप्ते" इति पाठान्तरद्वयम्। तथा भोजनान्तरे भोजनमध्यसमये, चकारात् भोजनावसाने, अतिशयदुःखेन गम्यते इति दुर्गतमा अति-गभीरत्वेन दुर्ज्ञेया, नदी यथा, न ज्ञायते तदभ्यन्तरस्थं वस्तुजातं सुस्पष्टं ज्ञातुं न शक्यते, नाड़ी अपि तथा याथार्थ्येन, न ज्ञायते न अनुभूयते, स्वाभाविकावस्थातः विकृतत्वादिति भावः। अत्र चकारत्रयं प्रत्ये-कशः प्राधान्यद्योतनपरम्। तदुक्तं—"सद्यःस्नातस्य भुक्तस्य क्षुत्तृष्णा-ऽऽतपसेविनः। व्यायामक्लान्तदेहस्य सम्यग्नाड़ी न बुध्यते॥" इति ॥१३॥

अङ्गुष्ठस्य तु मूले या सा नाड़ी जीवसाक्षिणी।
तस्या गतिवशाद्विद्यात् सुखं दुःखञ्च रोगिणाम्॥ १४

नाड़ीपर्य्यायः।

स्नायुर्नाड़ी वसा हिंस्रा धमनी धामनी धरा।
तन्तुकी जीवितज्ञा च शिरापर्य्यायवाचिकाः॥ १५॥

अङ्गुलित्रयेण त्रिविधधातुज्ञानविधिः।

आदौ च वहते वातो मध्ये पित्तं तथैव च।

---

"अङ्गुष्ठमूलमधि पश्चिमभागमध्ये" इति प्रागुक्तं शिष्यावबोधदार्ढ्याय प्रकारान्तरेण पुनरप्याह, अङ्गुष्ठस्येति।—अङ्गुष्ठः वृद्धासंज्ञितः, तस्य मूले अधोभागे, चुद्रग्रन्थिप्रान्तादङ्गुलिद्वयपरिमितस्थाने इत्यर्थः, भिषजः तर्जनीनिवेशस्थाने इति यावत्, या नाड़ी, सा जीवसाक्षिणी, जीवस्य जीवनस्य साक्षिणी साक्षिस्वरूपा प्रत्ययकारिणी, प्राणानां सत्ता-ज्ञापनीत्यर्थः। तस्या एव गतिवशात् स्पन्दनवशात् रोगिणाम् आतु-राणां, रोगिणामित्युपलक्षणं, तेन सुस्थानामपि, सुखं दुःखं वा विद्यात् जानीयात्॥ १४॥

नाड़ीपर्य्यायमाह, स्नायुरित्यादि।—दश नामानि। स्पष्टार्थम्॥१५॥

वातादीनां साहजिकीं गतिमाह, आदाविति।—आदौ कर्णाशि-निपीड़नानन्तरं परीक्षणीयनाड़ीस्पर्शनक्षणे एव, न तु तर्जनी-निवेशस्थाने, न वा "अन्ते प्रभञ्जनो ज्ञेयः" इति कस्यचिदुक्तिवशात् अनामिकासन्निवेशस्थाने, स्थानभेदस्य कुत्राप्यनुल्लेखात्, वक्ष्यमाण-गतिभेदोद्देशे स्थानभेदानुपपत्तेः, तथा "न हि वातं शिराः काश्चित् न पित्तं केवलं तथा। श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः॥ प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम्। ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः॥" इति सौश्रुतशिरावर्णनविभक्तिशारीरवचनाभ्यां सर्वासां शिराणां सर्व्ववहत्वोक्त्या केवलवातवहनाद्या, अयौक्तिकत्वात्

# अन्ते च वहते श्लेष्मा नाड़िकात्रयलक्षणम् ॥१६॥

अनुभवाभावाच्च। वातो वायुः वहते स्पन्दते, मध्ये द्वितीयस्पर्शनक्षणे पित्तं वहते इति पूर्व्वतो योजनीयं, तथा अन्ते स्पर्शनस्य तृतीयक्षणे श्लेष्मा वहते इति पूर्व्ववद्योज्यम्; नाड़िकात्रयस्य इति लक्षणं ज्ञेयम्। अत्रैवं ज्ञातव्यं,—वायोर्गतिमत्त्वात् सर्व्वदोषप्राधान्यात् वक्रगतित्वाच्च अङ्गुलिनिपीड़नक्षण एव तस्यानुभूतिः, पित्तकफयोः पङ्गुत्वेन तदुपजीव्यत्वात् तदनन्तरमनुभूतिः, तत्रापि पित्तस्य उष्णतया चापल्येन कफापेक्षया प्राधान्याच्च द्वितीयनिपीड़नक्षणे तस्यामेव नाड्यामनुभूतिः, कफस्य च शीततया मान्द्येन, चिरकारितया च पूर्व्वोक्तायामेकस्यामेव नाड्यां सर्व्वपश्चादनुभूतिर्जायते। एतेन एतदुक्तं भवति,—प्रथमनिपीड़ने अङ्गुलीत्रये य आघातः तेन वायुः ज्ञेयः, द्वितीयपीड़ने एव पित्तं, तृतीये च श्लेष्मा बोद्धव्य इति। यत्तु कस्यचित् वचनमाश्रित्य भावमिश्रेण "वातेऽधिके भवेन्नाड़ी प्रव्यक्ता तर्ज्जनीतले। पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे॥" इत्युक्तं, तत्तु अरुन्धतीदर्शनन्यायेन प्रथमशिक्षार्थिनां सुकुमारमतीनां शिष्याणां सुखबोधार्थम्, अनन्तरमेव तेनैव "वहेत् वक्रञ्च मन्दञ्च वातश्लेष्माधिके ततः" इत्यादिवचनमुपजीव्य गतिभेदस्यापि स्वीकृतत्वात्। किंवा स्वभाव एव एष यत्—एकस्यामेव नाड्यां तर्ज्जनीनिवेशस्थले वायोः, मध्यमायां पित्तस्य, अनामायाञ्च कफस्यानुभूतिरिति। केचित् तु तर्जनीमध्यमाऽनामिकाभिर्निपीड़ने तर्जन्यामेव आघातस्य प्रथमत्वं, मध्यमायां द्वितीयत्वम्, अनामिकायां तृतीयत्वं मन्यमानाः, केचित् तु अनामिकामारभ्य तर्जन्यन्तम् आदिमध्यान्ताघातत्वं कथयन्तः वाय्वादीनां गतिविशेषमवगमयन्ति, तदुभयमपि न विचारसहम्। स्थानभेदेन वातादीनां गतिरनुभूयते इति कथनाभावात् वातादिगतिनिरूपणप्रस्तावे स्थानभेदस्यानिर्देशात् पृथगङ्गुलिविनिवेशेन च पृथग्दोषाणामनुभवविरहाच्च॥ १६॥

दोषलक्षणज्ञानम्।

वाताधिका वहेत् मध्ये त्वग्रे वहति पित्तला।
अन्ते च वहते श्लेष्मा मिश्रिते मिश्रलक्षणा ॥१७॥
आदौ च वहते पित्तं मध्ये श्लेष्मा तथैव च।

---

रोगाणामसाध्यकाले तत्तद्दोषस्य उल्वणतायां वा नाड़ीलक्षणमाह, वाताधिकेति।—वाताधिका वातोल्वणा नाड़ी, मध्ये द्वितीयनिपीड़नक्षणे, तर्जन्यनामिकयोर्मध्ये वा वहेत्। अग्रे प्रथमनिपीड़ने, अङ्गुष्ठमूले वा पित्तला पित्तोल्वणा, अन्ते अनामिकायां वा चरमनिपीड़ने, श्लेष्मा कफोल्वणा इत्यर्थः, वहेत्। मिश्रिते द्विदोषोल्वणे सन्निपाते वा, मिश्रलक्षणा सती, वहते इति शेषः। वचनमिदं पित्तोल्वणवातमध्यहीनकफसन्निपातपरत्वेनावधातव्यम्। अत्र उल्वणस्य पित्तस्य प्रथममभिधानस्योचित्येऽपि यत् पश्चादभिधानं, तत्तु वातः पित्तं कफः इति सन्निवेशक्रमस्य सर्वशास्त्रनियमितत्वादिति। श्लोकोऽयं पुस्तकान्तरे अदृष्टत्वात् प्रक्षिप्त इति बहूनां मतम् ॥ १७ ॥

आदाविति।—पित्तमादौ वहते, मध्ये श्लेष्मा, अन्ते प्रभञ्जनो ज्ञेय इति सुगमम्। एतद्वचनममूलकं,—पित्तस्य मध्ये सर्वैर्लिखितत्वात् सुस्थस्य तथा अनुभवाच्च कफस्य च मध्ये असङ्गतत्वाच्च। असाध्यतायामपि "पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाबिभ्रतीम्" इत्याद्युक्तेश्च। शङ्करसेनेनोक्तं, यथा—"अन्ते प्रभञ्जनो ज्ञेयः सर्वशास्त्रविशारदैः" इति तदमूलं, पित्तस्य सर्वत्रैव मध्यत्वेनाभिहितत्वात्, स्वस्थस्य तथा अनुभवाच्च। असाध्यतायां पूर्वं पित्तगतिरित्यस्य लिखितत्वाच्च, समूलत्वेऽपि असाध्यतादोषावेशपरं पित्तकालपरं वा 'यदा यं धातुमाप्नोति' इत्याद्युक्तेरिति केचित्"। अत्र समूलत्वे तु असाध्यतादोषाऽऽविष्टपरमिति शङ्करसेनोक्तेः कश्चिदेवं व्याचकार।—"यदा विकृतिविषमसमवेतवातप्रेरितो पित्तश्लेष्माणो स्वाश्रयपरित्यागिनो भवतस्तदा स्वस्थानं परिहृत्य गतिं कुरुत इति। दोषाविष्टमेवोक्तम्। अत्र दोषशब्दो

**अन्ते प्रभञ्जनो ज्ञेयः सर्वशास्त्रविशारदैः ॥ १८ ॥**

**स्वस्था नाड़ी ।**

**भूलता-भुजगप्राया स्वच्छा स्वास्थ्यमयी शिरा ।**

---

मायुमाहेति शङ्करसेनाभिप्रायः । आदौ तर्जनीनिवेशस्थले, मध्ये कफोणिपीड़नमपेत्य अर्थात् अनामिकानिवेशस्थले, अन्ते उपविष्टा अर्थात् मध्यमानिवेशस्थले यथाक्रमम् पित्तकफवाता वहन्ति ।" यत्तु "वाताधिका भवेदग्रे मध्ये श्लेष्माधिका भवेत् । अन्ते पित्ताधिका नाड़ी सन्निपाते त्रिलक्षणा ॥" इति केनचिदुक्तं, तदपि अमूलकमेव, समूलकत्वे तु वातोल्वणकफमध्यपित्तक्षीणसन्निपातपरत्वेन योजयितव्यम् । यत्तु "आदौ च वहते श्लेष्मा मध्ये पित्तं तथैव च । अन्ते प्रभञ्जनो ज्ञेयः—" इत्यादि केनचित् पठितं, तत्तु पूर्वाह्नमध्याह्नापराह्नरूपकालत्रये कफपित्तवायूनां प्रकोपं लक्ष्यीकृत्येति मन्तव्यम्; यदुक्तं सौश्रुतसूत्रे व्रणप्रश्नाध्याये—"स (कफः) शीतैः शीतकाले च वसन्ते च विशेषतः । पूर्वाह्ने च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥ तत् (पित्तम्) उष्णैरुष्णकाले च मेघान्ते च विशेषतः । मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति ॥ स (वातः) शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषतः । प्रत्यूषस्य पराह्ने तु जीर्णेऽन्ने च प्रकुप्यति ॥" इति । एतच्च वातादीनां व्याख्यानं स्थानविशेषस्य यदुक्तं, तत्तु सर्वसम्मतं, गतिविशेषस्य सर्वसम्मतत्वात् । अतः शङ्करसेनेन व्याख्यातं स्थानविशेषस्य कुत्राप्यवक्ष्यमाणत्वादिति ॥ १८ ॥

इदानीं व्याधितनाड़ीज्ञानस्य सुखितनाड़ीज्ञानापेक्षित्वात् सुस्थनाड़ीज्ञानमाह, भूलतेत्यादि ।—भूलता किञ्चुलुकः, भुजगः सर्पः, तयोरिव प्रायः प्रकर्षेण गमनं यस्याः सा भूलताभुजगप्राया, तयोरिव धीरगामिनीत्यर्थः, "भूलतागमनप्राया" इति पाठे,—भूलतेव गमनं प्रायेण बाहुल्येन यस्याः सा । स्वच्छा परितो जाड्यरहिता । "स्वस्था" इति पाठे,—स्वस्था प्रकृतिस्था, प्रातः स्निग्धमयी, मध्याह्ने श्रोष्णमयी,

सुखितस्य स्थिरा ज्ञेया तथा बलवती मता ॥१९॥
प्रातः स्निग्धमयी नाड़ी मध्याह्नेऽप्युष्णतान्विता।
सायाह्ने धावमाना च चिराद्रोगविवर्जिता ॥२०॥

नाड्या वातादि-ज्ञानम्।

वातादवक्रगता नाड़ी चपला पित्तवाहिनी।

---

सायं धावमानेत्यादिगुणविशिष्टेत्यर्थः, शिरा नाड़ी स्वास्थ्यमयी स्वास्थ्यव्यञ्जिका। सुखितस्य अरोगस्य "सुखसंज्ञकमारोग्यम्" इति चरकदर्शनात्, "सुखिनस्तु" इति पाठान्तरम्। स्थिरा मन्दगमना, बलवती स्थौल्ये सत्यपि जाड्यरहिता। सुखशब्दोऽत्र अरोगार्थकतया सुखसामान्यपरः, न तु अतिसुखपरः, तेन "भुक्तस्य वान्तस्य च मेदुरस्य निद्रारतस्यापि तथा रिरंसोः। कफाऽऽकुलस्यातिसुखे रतस्य स्थौल्यं दधाना शिथिलं प्रयाति॥" इति रामराजोक्तवचनेन अतिसुखे रतस्य नाड़ी स्थौल्यं बिभ्रती किञ्चिच्छिथिलरूपेण वहतीति दृश्यते, तस्य नात्रावसरः, सुखितस्य स्थौल्ये सत्यपि जाड्याभावः दार्ढ्यञ्च एतावदेव सुखितातिसुखभोगिनोर्भेदः इति॥ १९॥

सुस्थाया एव नाड्याः प्रातरादिकालभेदेन गतिविशेषमाह, प्रातरिति।—सुगमम्। चिरात् अतीतम् अनागतञ्च दीर्घं कालं व्याप्य इत्यर्थः, यदुक्तं शङ्करसेनेन—"चिरादिति अतीतानागतयोर्द्वयोरप्युक्तिः। अवान्तरभेदस्तु स्वल्पकालबहुकालव्यापकगतिभेदात्। एतच्च पथ्याशिनामेव"। अयमत्राशयः,—यस्य बहुदिनं रोगो नाभूत् वा अधिकदिनमध्ये रोगो न भविष्यति, तस्य नाड़ी प्रातःकाले स्निग्धमयी, मध्याह्ने उष्णताऽन्विता उष्णतायुक्ता, सायाह्नेऽपराह्ने धावमाना चञ्चला, इत्येवंक्रमेण अधिककालं वहति, स्वल्पकालमुक्तक्रमेण स्पन्दते चेत्, तदा स्वल्पकालं रोगो नाजनि जनिष्यते च स्वल्पेनैव कालान्तरेण इति॥ २०॥

वातादियुक्तायाः नाड्याः साहजिकीं गतिमाह, वातादिति।—

स्थिरा श्लेष्मवती ज्ञेया मिश्रिते मिश्रिता भवेत्॥२१

नाड्या गतिभेदः।

सर्पजलौकादिगतिं
वदन्ति विबुधाः प्रभञ्जनेन नाड़ीम्।
पित्तेन काक-लावक-
भेकादिगतिं विदुः सुधियः ॥२२॥

---

वातात् नाड़ी वक्रं तिरश्चीनं गतं गमनं यस्याः सा तादृशी, वक्रगता, भवतीति शेषः, वायोस्तिर्य्यग्गमनात् वातवाहिनी नाड़ी तिरोवहतीत्यर्थः। पित्तवाहिनी नाड़ी चपला चञ्चला, वह्नेरूर्द्ध्वज्वलनात् आग्नेयपित्तवाहिनी नाड़ी ऊर्द्ध्वचञ्चला इत्यर्थः। श्लेष्मवती श्लेष्मवाहिनी नाड़ी स्थिरा मन्दगामिनी, ज्ञेया लक्षणीया, जलस्य नीचगमनात् आप्यश्लेष्मवाहिनी नाड़ी अनुल्बणा इत्यर्थः। मिश्रिते द्विदोषत्रिदोषसम्मेलने मिश्रचिह्ना द्वित्रिदोषगतिविशिष्टा भवेत्। तेन द्विदोषजे उभयचिह्ना, त्रिदोषजे सर्वलिङ्गेति। वातादीनामेवं स्वाभाविकगतित्वात् तेषां प्रकोपकालेऽपि एवमेव गतयो ज्ञातव्या इति। ननु द्वन्द्वजे सन्निपाते च चपलतास्थिरतयोः विरुद्धधर्मयोरेकत्र समावेशः कथं सङ्गच्छते इति चेत्? उच्यते,—चपलतास्थिरतयोः समयभेदेनाविरोधः "कदाचिन्मन्दगा नाड़ी कदाचिच्छीघ्रगा भवेत्" इत्याद्युक्तेः॥२१॥

अथ सामान्येन दोषभेदात् नाड़ीनां गतिविशेषमुक्त्वा इदानीं शिशिक्षूणां तद्वक्रतादिज्ञानस्य स्फुटावबोधार्थं दृष्टान्तप्रदर्शनद्वारा विशेषगतिमाह, सर्पेति द्वाभ्याम्।—विबुधाः पण्डिताः, प्रभञ्जनेन कुपितवातेन नाड़ीं सर्पजलौकादिगतिं तद्वद्गतिविशिष्टां, दोलायितगतिमिति भावः, वदन्ति कथयन्ति। आदिशब्दात् वृश्चिकादिगतिर्बोद्धव्या; सर्पादयो यथा शनैः शनैः वक्रभावेण गच्छन्ति, कदाचित् वा दोलायितभावेन सर्पन्ति, वातवाहिनी नाड़ी अपि तथा गच्छति इत्यर्थः।

**राजहंसमयूराणां पारावत-कपोतयोः।**
**कुक्कुटस्य गतिं धत्ते धमनी कफसंवृता ॥ २३ ॥**

**द्वन्द्वजा नाड़ी।**

**मुहुः सर्पगतिं नाड़ीं मुहुर्भेकगतिं तथा।**

---

पित्तेन कुपितपित्तेन काकादिगतिं काकादिवत् प्लुतगतिमित्यर्थः। अत्र लावकः "लाओया" इति ख्यातः पक्षिविशेषः। सुधियः पण्डिताः विदुः जानन्ति। आदिशब्दात् कुलिङ्ककलविङ्कादिगतिः अनुमन्तव्या। काकादिः यथा गच्छन् गच्छन् क्षणमवस्थाय उत्प्लुत्य उत्प्लुत्य गच्छति, कदाचिद्वा अविच्छिन्नतीव्रवेगेण दीर्घकालं गच्छति, पित्तवाहिनी नाड़ी अपि तथा यातीत्यर्थः ॥ २२ ॥

राजहंसेति।—कफसंवृता कुपितकफयुक्ता धमनी नाड़ी राजहंसमयूराणां तथा पारावतकपोतयोः कुक्कुटस्य च गतिं धत्ते। गम्भीरधीरगतिमित्यर्थः। अत्र कपोतो नाम वेगाधिकः दूरगामी चित्रग्रीवः पारावतविशेषः। राजहंसशब्दोऽत्र गतिसाम्यात् गजवरवराङ्गनादिगतेरपि ज्ञापक इति मन्तव्यम्। राजहंसादयो यथा सगौरवधीरपदक्षेपेण धरित्रीं नमयन्त इव गच्छन्ति, कफवाहिनी नाड़ी अपि तथा गौरवं दधाना अन्तः प्रविशन्तीव वा मन्दं मन्दं गच्छतीत्यर्थः। रामराजस्तु "वातेन नाड़ीस्फुरणं जलौका-भुजङ्गवद् वृश्चिकवच्च धत्ते। पित्तेन मण्डूककुलिङ्गलाव-गतिप्रतीतिं कुरुतेऽथ नाड़ी ॥ भुक्तस्य वान्तस्य च मेदुरस्य निद्रारतस्यापि तथा रिरंसोः। कफाऽऽकुलस्यातिसुखे रतस्य स्थौल्यं दधाना शिथिलं प्रयाति ॥" इति यदुक्तवान् तत्तु चयकोपप्रशमनदशाभेदेनेति बोद्धव्यम् ॥ २३ ॥

एकैकदोषजनाड़ीगतिं पृथक् पृथगुक्त्वा द्वन्द्वजनाड़ीगतिमाह, मुहुरित्यादि त्रिभिः।—या मुहुर्वारंवारं सर्पगतिं वक्रगतिं, तथा मुहुः भेकगतिं प्लुतगतिं, धत्ते इति शेषः, मनीषिणः पण्डिता एवम्भूतां तां

वातपित्तद्वयोद्भूतां तां वदन्ति मनीषिणः ॥२४॥
भुजगादिगतिं नाड़ीं राजहंसगतिं तथा।
वातश्लेष्मसमुद्भूतां भाषन्ते तद्विदो जनाः ॥२५॥
मण्डूकादिगतिं नाड़ीं मयूरादिगतिं तथा।
पित्तश्लेष्मसमुद्भूतां प्रवदन्ति विचक्षणाः ॥ २६ ॥

---

नाड़ीं वातपित्तद्वयोद्भूतां द्वन्द्वजामित्यर्थः, वदन्ति कथयन्ति। या नाड़ी पर्य्यायेण सर्पादिवत् वक्रगतिं तथा भेकादिवत् प्लुतगतिं धत्ते, तां प्रकुपितवातपित्तजां विद्यादित्यर्थः। सर्पगतिं भेकगतिमित्यत्र आदि-शब्दः लुप्तो द्रष्टव्यः, परत्र दर्शनात् ॥ २४ ॥

भुजगेति।—भुजगादिवद् गतिः संस्थानं यस्यास्तां, तथा राजहंस-गतिं नाड़ीं तद्विदो जना नाड़ीज्ञपण्डिता वातश्लेष्मसमुद्भूतां भाषन्ते कथयन्ति, या नाड़ी सकृत् भुजगादिवत् गतिं सकृत् राजहंसादिवत् गतिं बिभर्त्ति, तां प्रदुष्टवातपित्तजां विद्यादित्यर्थः। राजहंसगति-मित्यत्रापि आदिशब्दः लुप्तः बोद्धव्यः ॥ २५ ॥

मण्डूकेति।—विचक्षणाः पण्डिता मण्डूकादिगतिं तथा मयूरादि-गतिं तद्वद्गतिविशिष्टां नाड़ीं पित्तश्लेष्मसमुद्भूतां प्रवदन्ति कथयन्ति। भुजगादि-मण्डूकादि-इत्यादौ आदिशब्देन वातस्य पित्तस्य कफस्य च उक्ताभ्यः गतिभ्यः अन्याऽपि वृश्चिककुलिङ्गकलविङ्कगजवराङ्गनादीनाञ्च गतिर्ग्राह्या। शङ्करसेनः आह,—"एवञ्च पौर्वापर्य्यव्यतिक्रमेणापि कृच्छ्र-साध्यादित्वम्" इति। तत्र पौर्वापर्य्यव्यतिक्रमेणेत्यस्यायमाशयः,—"आदौ च वहते वातो मध्ये पित्तं तथैव च। अन्ते च वहते श्लेष्मा नाड़िकात्रय-लक्षणम् ॥" इत्येवंक्रमेण यदा नाड़ी वहते, तदा सुखसाध्यत्वं ज्ञेयम्, एतद्व्यतिक्रमेण कृच्छ्रसाध्यत्वमसाध्यत्वञ्च ज्ञेयमिति ॥ २६ ॥

अन्यच्च ।

**सूक्ष्मा शीता स्थिरा नाड़ी पित्तश्लेष्मसमुद्भवा ।**
**कफवातोद्भवा नाड़ी सर्पहंसगतिर्भवेत् ॥२७॥**

त्रिदोषे नाड़ीगतिः ।

**उरगादिलावकादिहंसादीनाञ्च विभ्रती गमनम् ।**
**वातादीनाञ्च समं धमनी सम्बन्धमाधत्ते ॥२८॥**

---

प्रकारान्तरमाह सूक्ष्मेति ।—पित्तञ्च श्लेष्मा च पित्तश्लेष्माणौ, तयोः सम्यक् उद्भवः यस्यां सा पित्तश्लेष्मसमुद्भवा पित्तश्लेष्मसंयुक्ता इत्यर्थः, नाड़ी सूक्ष्मा अणुः शीता शैत्यगुणवती, स्थिरा मन्दगतिः भवेदिति परेणान्वयः । अत्र आग्नेये पित्ते सूक्ष्मता न विरुद्धा, तैजसे हि द्रव्ये सौक्ष्म्यस्य धर्म्मस्य विद्यमानत्वात्, तथा च सौश्रुतमूले द्रव्यविशेषविज्ञानीयेऽध्याये—"उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदं रूपगुणबहुलमीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावमिति तैजसं, तद्दहनपचनदारणतापनप्रकाशनप्रभावर्णकरमिति" अतः नाड्याः सूक्ष्मताऽत्र पित्तकार्य्यत्वेन शैत्यस्थैर्य्ये च कफकार्य्यत्वेनानुमन्तव्यम् । अथवा पित्तश्लेष्मणोर्द्रवत्वात् सूक्ष्मत्वम्, अथवा सूक्ष्मत्वञ्चात्र व्याधिमहिम्ना इति गुरवः । एवं कफस्य वातस्य च उद्भवो यस्यां सा नाड़ी सर्पस्य हंसस्य च गतिरिव गतिर्यस्याः तथाविधा इत्यर्थः भवेदिति ॥ २७ ॥

द्वन्द्वजगतिमुक्त्वा सन्निपातजां गतिमाह, उरगादीति-सार्द्धपद्यद्वयेन ।—उरगादीनां लावकादीनां हंसादीनां, चः समुच्चयार्थः, गमनं गतिं बिभ्रती धारयन्ती धमनी नाड़ी वातादीनां वातपित्तकफानां समं तुल्यं न तु न्यूनातिरिक्तं, सम्बन्धं संयोगक्रमम् आधत्ते, सन्निपाते इति शेषः । समानतया प्रकुपितत्रिदोषजेषु व्याधिषु धमनी उरगलावकराजहंसादीनां गतिसाम्यम् अन्यूनाधिकतया प्रकटयतीत्यर्थः । लक्षणमेतत्तु—"द्वात्रिंशत्कोत्थैः षट् स्युर्हीनमध्याधिकैश्च षट् । समैश्चैको विकारास्ते

लावतित्तिरिवार्त्ताकगमनं सन्निपाततः।
कदाचिन्मन्दगा नाड़ी कदाचिच्छीघ्रगा भवेत्।
त्रिदोषप्रभवे रोगे विज्ञेया सा भिषग्वरैः ॥२९॥

असाध्यसन्निपातजा नाड़ी।

मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलं वा
स्थित्वा स्थित्वा वहति धमनी याति नाशञ्च सूक्ष्मा।

---

सन्निपातास्त्रयोदश॥" इति त्रयोदशविधेषु सन्निपातेषु समकुपित-त्रिदोषजाया अवगन्तव्यम्। अत्रेदं वक्तव्यं,—सन्निपाते धमनी आदौ उरगादिवत् मध्ये लावकादिवत् अन्ते हंसादिवत् इति पर्य्याय-क्रमेण चलति चेत् तदा असाध्यत्वं न ज्ञेयम्; किन्तु यदि पित्तक्रम-तया आदौ पित्तगतिः, मध्ये वायुगतिः, अन्ते श्लेष्मगतिः, अथवा आदौ श्लेष्मगतिः, मध्ये वायुगतिः, अन्ते पित्तगतिः इत्यादि-विपरीतक्रमेण वहते, तर्हि कृच्छ्रसाध्यत्वम् असाध्यत्वञ्च ज्ञेयं, "पूर्व्वं पित्तगतिं प्रभञ्जनगतिम्" इत्यादि वक्ष्यमाणोक्तेः॥ २८॥

लावेति।—सन्निपाततः त्रिदोषजे रोगे नाड़ी, लावः पूर्व्वोक्तः पक्षि-भेदः, तित्तिरः "टिटिर" इति ख्यातः पक्षिभेदः, वार्त्ताकः "वटेर" इति ख्यातः पक्षिभेदः, तेषां लावादीनां गमनं, "लावतित्तिरिवार्त्ताक-गमनम्" इत्यत्र "लावतित्तिरवर्त्तीकागमनम्" इति पाठान्तरम्। धत्ते इति शेषः। या नाड़ी कदाचिन्मन्दगा मृदुभावेन गच्छति, कदाचित् क्षणकालान्तरं शीघ्रगा द्रुतगामिनी भवेत्, एवम्भूता सा नाड़ी भिषग्वरैः चिकित्सकप्रवरैः त्रिदोषप्रभवे रोगे सन्निपाते विज्ञेया॥ २९॥

सन्निपातासाध्यलक्षणमाह, मन्दमिति।—सन्निपातात् धमनी नाड़ी मन्दं मन्दं मुहुर्मुहुरप्रखरं, मृदुमृदुभावेनेत्यर्थः, शिथिलशिथिलं स्खलद्गतिरूपं, दृढ़ताविवर्ज्जितभावेनेत्यर्थः, व्याकुलं व्याकुलं भीत-

नित्यं स्थानात् स्खलति पुनरप्यङ्गुलीं संस्पृशेद्वा
भावैरेवं बहुविधविधैः सन्निपातादसाध्या ॥३०॥

अन्यच्च।

अत्युच्चका स्थिराऽत्यन्तं या चेयं मांसवाहिनी।

---

वदितस्ततो गमनं, अतिद्रुतमित्यर्थः, तद् यथा स्यात्तथा ; अत्र सर्व्वत्र कदाचिदिति पदमूहनीयम् ; स्थित्वा स्थित्वा विश्रम्य विश्रम्य, पुनः-पुनरावृत्त्या तत्तद्रूपेणेत्यर्थः, वहति चलति, वा कदाचित् सूक्ष्मा अननुभवनीयेव सतीत्यर्थः, नाशम् अदर्शनञ्च याति अननुभवत्वं गच्छति, कदाचित् नाड्याः स्पन्दनमपि नानुभूयते इत्यर्थः, अत्रायं वृद्धोपदेशो ज्ञातव्यः,—सूक्ष्मा सती नाशं याति, विशेषानुधावनेन यदि कदाचिदनुभूयते, तदा सूक्ष्मैवानुभूयते इति। तथा स्थानात् स्वस्थानात् अङ्गुष्ठमूलात् इति यावत्, नित्यं सर्व्वदा, पुनःपुनरित्यर्थः, शङ्करसेनस्तु—"नित्यं प्रायः" इति। स्खलति अपगच्छति, तत्र स्पन्दनानुभूतिर्न ज्ञायते इत्यर्थः। उक्तञ्चान्यत्र—"हन्ति च स्थानविच्युता" इति, "क्रमेण त्यजति स्थानं या नाड़ी सा च मृत्यवे" इति च। "नित्यं स्थानात् स्फुरति" "नित्यं किञ्चित् स्फुरति" इति च पाठान्तरद्वयमसाधु। पुनरपि किञ्चित् विलम्बेनेत्यर्थः, अङ्गुलीम् अङ्गुष्ठमूलमित्यर्थः, संस्पृशेत् अकस्मात् स्फुरेत्, अङ्गुल्या अनुभूयेत इत्यर्थः। "वा"शब्दोऽत्र पूर्व्वगत्यपेक्षया बोद्धव्यः। "वा" इत्यत्र "या" इति पाठान्तरम्। एवं बहुविधा विविधा विधा प्रकाराः येषां तैः बहुविधविधैर्नानाप्रकारैर्भावैर्धर्मैः। अत्र वैविध्यबहुत्वस्य अत्यन्तविवक्षितत्वात् बहुविधविधैरिति नाधिकपदतादोषः। असाध्या, विज्ञेया इति शेषः ॥ ३० ॥

अत्युच्चकेति।—अत्युच्चका सहजतोऽप्युच्चतरा, पृथगिवोन्नता इत्यर्थः, त्वचं विदार्य्य बहिरागन्तुमिवोद्यता इत्यर्थः, "अत्युच्चका" इत्यत्र "याऽत्युच्चका" "या तूच्चका" "या वा स्थूला" इति पाठान्तरत्रयम्।

या च सूक्ष्मा च वक्रा च तामसाध्यां
विनिर्दिशेत् ॥ ३१ ॥

अन्यञ्च।

महातापेऽपि शीतत्वं शीतत्वे तापिता शिरा।
नानाविधगतिर्यस्य तस्य मृत्युर्न संशयः ॥ ३२ ॥

---

अत्यन्तम् अधिकम् अतिशयमित्यर्थः, स्थिरा निश्चला, कदाचित् प्रणिधानेनैव गम्यमानस्पन्दा इत्यर्थः, या च इयं नाड़ी, इयमिति वैशिष्ट्यबोधनाय। मांसेन मांसभक्षणेनैवेत्यर्थः, वहति धारयति, आत्मानं पुष्णातीत्यर्थः, मांसवाहिनी मांसाहारा इव गतिमती मांसभोजनेन यादृग्गतिर्भवति, तादृग्गतिविशिष्टा इत्यर्थः, "मांसे च लगुड़ाकृतिः" इति वक्ष्यमाणोक्त्या लगुड़वदुच्छूनकठिनतया दण्डायमाना इवेति भावः ; मांसेन समं वहतीति न युक्तं, तद्रूपपरिचायकप्रकारस्यानुक्तत्वात्। या च सूक्ष्मा च वक्रा वक्रगामिनी चेति पृथगेव वाक्यान्तरम् इति। तां नाड़ीम् असाध्यां विनिर्दिशेत् जानीयात् ॥ ३१ ॥

महेति।—महातापेऽपि शरीरस्योत्तापाधिक्ये सत्यपि, अत्र महत्पदेन "प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये। स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥ तदा तोदश्च दाहश्च तत्र तत्रानवस्थितः। गात्रदेशे भवेत्तस्य श्रमो दौर्बल्यमेव च ॥" इति चरकवचनोक्तः स्वाशयाऽऽकृष्टप्रकृतिस्थपित्तजन्यदाहसन्तापनिरासः ; तत्र हि दैहिकसन्तापे सत्यपि नाड्याः शीतत्वं नारिष्टसूचकमिति। शीतत्वं शिरायाः शीतलत्वं, तथा शरीरस्य शीतत्वे, अत्रापि महेतिपदं सम्बन्धनीयं, तेन महाशीतत्वे अतिशयशीतलत्वे सत्यपि, शिरा नाड़ी यदि तापिता उष्णा भवेदिति शेषः, तथा यस्य देहिनः, शिरा नानाविधा गतिर्यस्याः तादृशी नानाविधगतिर्वातपित्तकफद्वन्द्वसन्निपातानां गतिविशिष्टा

अन्यच्च।

त्रिदोषे स्पन्दते नाड़ी मृत्युकालेऽपि निश्चला।
ज्ञेयं सर्वविकारेषु वैद्यैः कुशलकर्मभिः॥ ३३॥

अन्यच्च।

पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाविभ्रतीं
सन्तानभ्रमणं मुहुर्विदधतीं चक्राधिरूढ़ामिव।

---

इत्यर्थः, भवति इति शेषः, तस्य जनस्य मृत्युः भवतीति शेषः, न संशयः, अत्र संशयो नास्ति, तस्य निश्चयेन मृत्युर्भवति॥ ३२॥

त्रिदोषे इति।—त्रिदोषे सन्निपाते मृत्युकालेऽपि, अपिशब्दात् मृत्योः प्राक् तु स्पन्दते एव, अत्र न किञ्चित् वक्तव्यमिति गम्यते। निश्चला इत्यत्र अपिशब्दः "स्पन्दते" इति पदसामर्थ्यात् ऊहनीयः, निश्चला अपि बहुक्षणं सर्व्वथा स्पन्दसामान्याभाववत्यपीत्यर्थः नाड़ी स्पन्दते स्फुरति, एवं सर्वेषु विकारेषु कुशलकर्म्मभिः सुनिपुणैः वैद्यैः भिषग्भिः ज्ञेयम्; अत्रायमाशयः,—मूर्च्छाऽतीसारादिरोगे बहुक्षणं स्पन्दरहिताया अपि नाड्याः हस्तपादादौ स्वेदाद्युपचारेण स्पन्दोपलब्धिर्जायते, सन्निपाते तु दोषस्वभावात् मृत्योः बहुपूर्व्वेऽपि कदाचिन्निस्पन्दा नाड़ी तिष्ठति, क्षणविलम्बेन पुनरपि स्फुरति, इति तु "नित्यं स्थानात् स्खलति पुनरप्यङ्गुलीं संस्पृशेद् या" इत्यत्र व्यक्तीकृतं, किन्तु मृत्युकालेऽपि तथाविधा निश्चला नाड़ी स्वेदादिं विनाऽपि सकृत् स्फुरणं प्राप्नोति। यत्र तु एवंविधा नाड़ीगतिर्भवति, सा नाड़ी मृत्युज्ञापिका॥ ३३॥

अपरमसाध्यत्वज्ञानमाह, पूर्वमिति।—नाड़ीगतिज्ञानिनो मुनयः पूर्वं प्रथमं पित्तगतिं "चपला पित्तवाहिनी" इत्युक्तेः चपलगतिमित्यर्थः, तदनन्तरं प्रभञ्जनगतिं वायुगतिं "वाताद्वक्रगता नाड़ी" इत्युक्तेः वक्रगतिमित्यर्थः, ततः श्लेष्माणं श्लेष्मगतिं "स्थिरा श्लेष्मवती ज्ञेया"

**तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीं**
**नो साध्यां धमनीं वदन्ति मुनयो नाड़ीगति-**
**ज्ञानिनः ॥ ३४ ॥**

मृत्युकालज्ञानम् ।

**भूलताभुजगाकारा नाड़ी देहस्य सङ्क्रमात् ।**

---

इत्यनेन मन्दगतिमित्यर्थः, आबिभ्रतीं दधानां, वातः पित्तं कफः इत्येवंक्रमेण गतेः स्वाभाविकत्वात् प्रथमं पित्तगत्या क्रमविपर्य्ययेण गतिमतीमित्यर्थः, चक्राधिरूढ़ामिव एवंक्रमेण चक्रोपरि भ्राम्यमाणामिव मुहुः पुनः पुनः, सन्तानेन विस्तारेण मुहुर्मुहुरावर्त्तनेनेत्यर्थः, भ्रमणं सन्तानभ्रमणं, चक्राधिरूढ़ो यथा चक्रगत्या कदाचिदूर्द्धं कदाचित् पार्श्वं, कदाचिदधः एवंक्रमेण पुनः पुनर्भ्राम्यति, तथा कदाचिदग्रे कदाचित् मध्ये, कदाचिदन्ते एवंक्रमेण पुनः पुनः आवर्त्तनमित्यर्थः। विदधतीम्; एतेन स्थानत्रयं व्याप्य वारं वारं गतिं कुर्व्वतीम्। "सन्तानभ्रमणम्" इत्यत्र "सन्तापभ्रमणम्" इति पाठान्तरम्। तथा तीव्रत्वम् आदौ अतिशयवेगं दधतीम्; एतेन पित्तगतिः प्रदर्शिता, चपलगतिकत्वेन तस्य ततः कलापिगतिकां मयूरगतिं धीरगतिमित्यर्थः, एतेन श्लेष्मगतिः प्रदर्शिता, तस्य च राजहंसमयूरादिगतिकत्वात। तथा सूक्ष्मत्वम् उत्तरोत्तरं कृशताम् आतन्वतीं बिभ्रतीम्, उत्तरोत्तरं कृशताप्राप्तिस्तु असाध्यतायां विशिष्टो हेतुर्ज्ञातव्यः। एतेन वातगतिः प्रकटिता, "रूक्षः शीतो लघुः सूक्ष्मः चलोऽथ विशदः खरः।" इत्यनेनोक्तस्य सूक्ष्मगुणवतः वातस्यापि सूक्ष्मगतिकत्वात्; अत्रापि पूर्व्वं पित्तगतिं ततः श्लेष्मगतिम् अनन्तरञ्च वातगतिमिति प्रदर्शनात् क्रमविपर्य्ययो ज्ञातव्यः, उक्तञ्च प्रागेव "आदौ च वहते पित्तं मध्ये श्लेष्मा तथैव च। अन्ते प्रभञ्जनो ज्ञेयः सर्व्वशास्त्रविशारदैः॥" इति। धमनीं नाड़ीं नो साध्याम् असाध्यां वदन्ति॥ ३४॥

अथ नाड़ीगतिवशेन मृत्युनिर्णयप्रसङ्गात् कस्यामवस्थायां कदा

विशीर्णा चीणतां याति मासान्ते मरणं ध्रुवम्॥३५॥

---

मृत्युर्भविष्यति इति कालनिर्णयमाह, भूलतेत्यादिभिः।—विशीर्णं रोगजीर्णं, देहे इति शेषः, देहस्य संक्रमात् संक्रममपेक्ष्य, कार्श्यस्थौल्ये अपेक्ष्य इत्यर्थः, नाड़ी भूलता किञ्चुलुकः, भुजगः सर्पः तयोराकारः इव आकारो यस्याः सा भूलताभुजगाकारा, कदाचित् महीलतावत् कृशा तद्गतिवत् मसृणवक्रगमना च, कदाचित् सर्पवत् परिपुष्टा तद्गतिवत् बलवद्वक्रगमना च इत्यर्थः, तथाभूता सती, चीणतां कदाचिदलभ्यताम् अतिकृशतां वा इत्यर्थः, गच्छति, "यदि तर्हि" इति पदद्वयमध्याहार्य्यम्; मासान्ते द्वितीये मासि इत्यर्थः, अत्र मासपदेन त्रिंशद्दिनानि लक्ष्यन्ते। ध्रुवं मरणं भवतीति शेषः। अत्राय-माशयः,—शीर्णदेहः जीर्णो रोगी यदि कदाचित् रोगस्वभावात् कृश एव तिष्ठेत्, कदाचिद् वा शोथादिना स्थूलो भवेत्, तथा देहानुसारेण तस्य नाड़ी भूलताभुजगाकारा सती, अर्थात् कृशा-वस्थायां भूलताकारा, स्थूलावस्थायां भुजगाकारा सती वहेत्,, किञ्च, तदवस्थायामेव कदाचित् स्पन्दनराहित्यात् अलक्ष्यतां कदा-चिद् वा अतिकृशतां गच्छेत्, तदा यस्मिन् दिने एवं भवति, तदपेक्षया द्वितीये मासि तस्य निश्चितं मृत्युर्ज्ञातव्यः। प्राक् स्वस्थस्य नाड़ी-गतिनिर्णयप्रसङ्गे "भूलताभुजगप्राया स्वच्छा स्वास्थ्यमयी शिरा" इत्यनेन स्वास्थ्यमय्या नाड्याः भूलताभुजगप्रायत्वं निर्दिष्टम्, अत्र पुनः मृत्युनिर्णयप्रसङ्गेऽपि नाड्यास्तादृग्गतित्वम् आदिष्टं, तद् विरोधेऽस्मिन् कः परिहारः? उच्यते,—स्वस्थस्य नाड़ीनिर्णये—"भूलताभुजगप्राया स्वच्छा" इत्युक्तं, तत्र स्वच्छा परितो जाड्यरहिता, "प्रातः स्निग्धमयी नाड़ी" इत्यादिलक्षणेन सह जाड्यराहित्यं तथा भूलतादिवत् अनुद्धत-गतित्वञ्च विवक्षितं, वक्रगतिकत्वादीनां विकृतनाड्याः परिचायकत्वात्, अत्र तु मृत्युनाड़ीनिर्णये तद्वद्गतित्वस्य वक्रगमनार्थो विवक्षितः, प्रकुपितदोषेण नाड़ीनां विकृतत्वात्, एवञ्च वक्रगमनत्ववैशिष्ट्येन सुस्थदशातो भेदः। वस्तुतस्तु तत्र "भूलतागमनप्राया" इत्येव युक्तः

**क्षणाद् गच्छति वेगेन शान्ततां लभते क्षणात् ।**
**सप्ताहान्मरणं तस्य यद्यङ्गं शोथवर्जितम् ॥ ३६ ॥**
**हिमवद्विशदा नाड़ी ज्वरदाहेन तापिनाम् ।**
**त्रिदोषस्पर्शभजतां तदा मृत्युर्दिनत्रयात् ॥३७॥**

---

पाठः । "क्षीणताम्" इत्यत्र "अक्षीणताम्" इति पाठे,—विशीर्णे अतिकृशेऽपि देहे उक्तप्रकारा नाड़ी यदि कदाचित् अक्षीणताम् अनतिकृशतां गच्छति, तदा मासान्ते त्रिंशद्दिनान्ते मरणं भवेदित्यर्थः ॥ ३५ ॥

क्षणादिति ।—यस्य नाड़ी क्षणात् क्षणकालं व्याप्य किञ्चित्काल-मध्ये इत्यर्थः, न तु विलम्बेन कदाचिदिति भावः, वेगेन अतिद्रुततया गच्छति वहति, क्षणात् सत्वरम्, अतिद्रुतगमनस्य परक्षणे एवेत्यर्थः, शान्ततां निश्चलतां स्पर्शानुपलभ्यत्वमित्यर्थः, लभते, निस्पन्दो भवतीत्यर्थः, तथा यदि तस्य रोगिणः अङ्गं शरीरं शोथवर्जितं शोथहीनं स्यात्, तदा सप्ताहात् सप्तदिनेभ्य ऊर्द्ध्वं सप्तदिनानन्तरम्, अष्टमेऽहनीत्यर्थः, यद्वा—सप्ताहात् सप्तमं दिनं प्राप्य, सप्तमेऽहनीत्यर्थः, मरणं, भवेत् इति शेषः । "शोथवर्ज्जितम्" इत्यनेन शोथसत्त्वे तु न तथा मृत्युः स्यात्, किन्तु चिरेणैवेत्यर्थः ॥ ३६ ॥

हिमवदिति ।—त्रिदोषस्पर्शभजतां सन्निपातजुषां ज्वरदाहेन ज्वरस्य दाहेन तापिनां ज्वरसन्तापेन सन्तप्तदेहानां, सन्निपातज्वरे सर्वदा दाहसन्तापपीड़ितानामित्यर्थः, नाड़ी यदि हिमवत् तुषारवत् शीतस्पर्शा इति शेषः, तद्वत् शीतत्वेन अनुभूयमाना इत्यर्थः, तथा विशदा सुव्यक्ता, न तु क्षीणा अपरिस्फुटा वा इति भावः, अत्र त्रिदोष-स्पर्शभजतामित्यनेन सन्निपातलक्षणसत्त्वे यदि एवं भवति, न तु दोषान्तरजे लक्षणे भवति इति शेषः, तदा दिनत्रयात् त्रिदिना-नन्तरं चतुर्थेऽहनि मृत्युः, भवतीति शेषः ॥ ३७ ॥

निरीक्ष्या दक्षिणे पादे तथा चैषा विशेषतः ।
मुखे नाड़ी वहेन्नित्यं ततस्तु दिनतुर्य्यकम् ॥३८॥
गतिं भ्रमरकस्येव वहेदेकदिनेन तु ।
कन्दे न स्पन्दते नित्यं पुनर्लगति चाङ्गुलौ ।
मध्ये द्वादशयामानां मृत्युरेव न संशयः ॥ ३९ ॥

---

निरीक्ष्येति ।—दक्षिणे पादे, पुरुषस्य इति शेषः, स्त्रीणां वामपादे एव; "लक्ष्यते दक्षिणे पुंसां या च नाड़ी विचक्षणैः । कुम्भभेदेन वामानां वामे सैवावलोक्यते ॥" इत्युक्तत्वात् ; तथा विशेषतः विशेषेण, दक्षिणे पादे नाड़ीगतिः यथा दृष्टा, दक्षिणे करेऽपि तथैव गतिश्चेत् निर्दिष्टदिने अवश्यमेव मरिष्यति इति विशेषज्ञानार्थमित्यर्थः, चकारात् दक्षिणे करेऽपि, स्त्रियास्तु वामे इति बोद्धव्यम् ; निरीक्ष्या परीक्षणीया । एषा यदि मुखे अग्रे तर्जनीनिवेशस्थाने इति यावत्, मध्यमाऽनामादि-निवेशस्थले मूर्च्छिता सती केवलं तर्जन्यामेवेति भावः, अथवा, मुखे तर्जन्यग्रे तर्जन्येकदेशे, न तु सर्वां तर्जनीं व्याप्येति भावः, नित्यं सदा वहेत्, ततस्तु तदा तु दिनतुर्य्यकं दिनचतुष्टयं व्याप्य, नरो जीवतीति शेषः । पञ्चमदिने तस्य मृत्युर्भवति । यद्वा—दिनतुर्य्यकं चतुर्थदिनं, प्राप्य म्रियते इति शेषः ॥ ३८ ॥

गतिमिति ।—भ्रमर एव भ्रमरकः, तस्य गतिमिव भ्रमरस्य परि-भ्रमणरूपं गमनमिव, अत्रापि मुखे इति बोद्धव्यम् ; वहेत्—यदि नाड़ी कियद्दूरं गत्वा पुनस्तत्रैवागत्य त्यक्तप्रदेशे यथा भ्रमरो भ्रमति तद्वत् नाड़ी अपि तथा मणिबन्धं त्यक्त्वा कियद्दूरमपसृत्य पुनर्मणिबन्धे एवागत्य स्फुरति, एवं पुनःपुनः भवेदित्यर्थः, "गतिम्" इत्यत्र "गतम्" इति पाठान्तरम् । तदा एकदिनेन तु एकदिवसमध्ये एव, म्रियते इति शेषः, तद्दिने मृत्यु रित्यर्थः । कन्दे इति ।—कन्दे मूले, नाड़ीमुखे इत्यर्थः, तर्जनीनिवेशस्थाने इति यावत्, नित्यं सदा, प्रायेण-

स्थित्वा स्थित्वा मुखे यस्य विद्युद्योत इवेक्ष्यते।
दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम्॥४०॥
स्वस्थानविच्युता नाड़ी यदा वहति वा न वा।
ज्वाला च हृदयेऽतीव तदा ज्वालाऽवधि स्थितिः ४१

---

त्यर्थः, न स्पन्दते, यदि नाड़ीति शेषः, एतेन कदाचित् स्वल्पं स्पन्दते इति सम्भाव्यते, "स्वल्पेव स्पन्दते" इति पाठे—तत्रैव स्वल्पं स्पन्दत इत्यर्थः। पुनःपुनरपि कदाचिदिति भावः, अङ्गुलौ अङ्गुलीमूले, तर्जन्यामित्यर्थः लगति च, "चाङ्गुलौ" इत्यत्र "नाङ्गुलौ" इति पाठान्तरम्। तदा द्वादशयामानां मध्ये द्वादशप्रहरमध्ये मृत्युरेव निश्चितं मृत्युः, भवतीति शेषः, न संशयः अत्र सन्देहो नास्तीत्यर्थः। "मृत्युर्भवति निश्चितम्" इति पाठान्तरम्। ॥ ३९ ॥

स्थित्वेति।—यस्य नाड़ी स्थित्वा स्थित्वा, "स्थित्वा स्थित्वा" इत्यत्र "स्थिरा नाड़ी" इति "स्थित्वा नाड़ी" इति च पाठान्तरम्। मुखे अङ्गुष्ठमूले, तर्जनीनिवेशस्थाने इत्यर्थः, विद्युद्योत इव चपलास्फुरणमिव ईक्ष्यते अनुभूयते, स्पन्दमाना नाड़ी अन्तरा अन्तरा यदि कदाचित् विद्युत्स्फुरणमिव स्फूर्त्तिमायातीत्यर्थः, तस्य जीवितं जीवनं दिनैकम् एकदिनं व्याप्य तिष्ठतीति शेषः। स ध्रुवं निश्चितं द्वितीये द्वितीयदिवसे स्फुरणकालादष्टप्रहरानन्तरमित्यर्थः, म्रियते॥ ४० ॥

स्वस्थानेति।—यदा नाड़ी कस्यचिदातुरस्येति शेषः, स्वस्थान-विच्युता स्वस्थानात् अङ्गुष्ठमूलात् विच्युता स्खलिता सती, वहति, वा न वा वहति, अन्तरा अन्तरा स्थित्वा स्थित्वा वहतीत्यर्थः, अत्र प्रथम"वा"शब्दः समुच्चयार्थकः, द्वितीयस्तु विकल्पवाचको ज्ञेयः। हृदये वक्षःस्थले च, अतीव "अतीव" इत्यत्र "तीव्रा" इति पाठान्तरम्। ज्वाला चेत् तदा तस्य ज्वालाऽवधि ज्वालापर्य्यन्तं, स्थितिः जीवनस्य सीमेत्यर्थः, यावत्कालं ज्वाला विद्यते, तावत्कालं स जीवति, ज्वाला-विरतिसमकालमेव म्रियते इत्यर्थः॥ ४१ ॥

अङ्गुष्ठमूलतो बाह्ये द्व्यङ्गुले यदि नाड़िका।
प्रहरार्द्धाद् वहिर्मृत्युं जानीयाच्च विचक्षणः ॥४२॥
द्व्यङ्गुलाद् बाह्यतो नाड़ी मध्ये रेखा वहिर्यदि।
सार्द्धप्रहरकान्मृत्युर्जायते नात्र संशयः ॥ ४३ ॥
मध्ये रेखासमा नाड़ी यदा तिष्ठति निश्चला।

---

अङ्गुष्ठमूलत इति।—अङ्गुष्ठमूलतः वृद्धाङ्गुलिमूलम् आरभ्य द्व्यङ्गुले बाह्ये अङ्गुलीद्वयनिम्ने ; अङ्गुष्ठमूलमारभ्य अङ्गुलीद्वयपरिमितस्थानादूर्द्ध्वमित्यर्थः, तर्जनीमध्यमे परित्यज्य अनामिकायामिति यावत्, यदि नाड़िका वहतीति शेषः, तदा विचक्षणः पण्डितः, प्रहरार्द्धात् वहिः अर्द्धप्रहरानन्तरं मृत्युं जानीयात् ॥ ४२ ॥

द्व्यङ्गुलादिति।—बाह्यतः इत्यत्र अङ्गुष्ठमूलत इति पूर्व्वश्लोकादन्वेतव्यम् ; अङ्गुष्ठमूलतो बाह्यतः अङ्गुष्ठमूलनिम्ने, अङ्गुष्ठमूलस्थाङ्गुलोपरिमितस्थानादूर्द्ध्वमित्यर्थः, द्व्यङ्गुलात् मध्ये अङ्गुलीद्वयमितस्थानमध्ये, अङ्गुलीद्वयपरिमितस्थानमधिष्ठाय इत्यर्थः, तर्जनीं विहाय मध्यमाऽनामिकयोरिति यावत्, यद्वा—द्व्यङ्गुलात् अङ्गुलीद्वयपरिमितस्थानमधिष्ठाय, मध्ये अङ्गुलीद्वयमध्ये एव, न तु अङ्गुलीद्वयादूर्द्ध्वमित्यर्थः, नाड़ी यदि रेखा रेखाकारा इत्यर्थः, दीर्घाकारा, न तु सङ्कुचितेति भावः, तथा सती, वहेदिति शेषः, तदा सार्द्धप्रहरकात् वहिः सार्द्धप्रहरानन्तरं सपादैकादशदण्डात् परमित्यर्थः, मृत्युर्जायते, अत्र संशयो न ॥ ४३ ॥

मध्ये इति।—मध्ये अङ्गुष्ठमूलतो द्व्यङ्गुले मध्ये इत्यर्थः, अङ्गुष्ठमूलमधिकृत्य अङ्गुलीद्वयपरिमितस्थाने इति भावः, एतेन तर्जनीमध्यमानिवेशस्थाने इति बोद्धव्यं, यदा नाड़ी रेखासमा रेखाकारा, दीर्घाकारा, न तु सङ्कुचितेति भावः, तथा सती, वहेदिति शेषः, निश्चला

षड्भिश्च प्रहरैस्तस्य ज्ञेयो मृत्युर्विचक्षणैः ॥४४॥
पादाङ्गुलगता नाड़ी चञ्चला यदि तिष्ठति।
त्रिभिस्तु दिवसैस्तस्य मृत्युरेव न संशयः ॥४५॥
पादाङ्गुलगता नाड़ी कोष्णा वेगवती भवेत्।
चतुर्भिर्दिवसैस्तस्य मृत्युरेव न संशयः ॥ ४६ ॥
पादाङ्गुलगता नाड़ी मन्दमन्दा यदा भवेत्।

---

कदाचित् स्पन्दाभाववती सती तिष्ठति, न तु रेखासमा नाड़ी निश्चला तिष्ठति इत्येवं योजनीयं, सदैव निश्चलत्वे रेखाकारत्वस्यानुभवाभावात्, न हि निस्पन्दाया नाड्या गतिविशेषोऽनुभवितुं शक्यते कैश्चिदपि, अतः रेखासमा सती वहति, कदाऽपि वा निस्पन्दा च भवति, पुनः रेखासमा वहतिः, पुनर्निस्पन्दा भवति इत्येवार्थः सङ्गतः। तदा षड्भिः प्रहरैः षट्प्रहरानन्तरं (फलनिष्पत्तौ तृतीया) विचक्षणैः तस्य मृत्युर्ज्ञेयः ॥ ४४ ॥

पादाङ्गुलगतेति।—पादाङ्गुलं पादयुक्ताङ्गुलं, सपादमङ्गुलमित्यर्थः, तर्जनीमभिव्याप्य मध्यमायाः पादमेकं तद्गता, यद्वा—पादाङ्गुलम् अङ्गुलपादम्, अत्राङ्गुलशब्देन तर्जनी अभिप्रेता, तस्या एव प्रथमत्वात्, तच्चतुर्थांशमित्यर्थः तस्माद्गता पादाङ्गुलगता अङ्गुलीपादं परित्यज्य स्थिता इत्यर्थः, नाड़ी यदि चञ्चला सती तिष्ठति, नाड़ी यदि तर्जन्याश्चतुर्थांशे एव निस्पन्दा सती अन्यत्र चञ्चला वहति, तदा तु तस्य त्रिभिर्दिवसैः तृतीयदिने इत्यर्थः, (अत्रापि पूर्ववत्तृतीया) मृत्युः एव, अत्र न संशयः ॥ ४५ ॥

पादाङ्गुलेति।—पादाङ्गुलगता इति पूर्ववत् व्याख्या कार्य्या; पादाङ्गुलदेशे नाड़ी यदि कोष्णा ईषदुष्णा, वेगवती च भवेत् तदा चतुर्भिर्दिवसैः चतुर्थे दिवसे, तस्य मृत्युरेव, अत्र संशयो न ॥ ४६ ॥

पादेति।—पादाङ्गुलगता इति पूर्ववद्व्याख्येया, नाड़ी यदा, मन्द-

पञ्चभिर्दिवसैस्तस्य मृत्युर्भवति नान्यथा ॥४७॥
एवं संख्याऽऽदिभेदेन नाड़ी ज्ञेया विचक्षणैः।
स्वर्गेऽपि दुर्लभा विद्या गोपनीया प्रयत्नतः ॥४८॥

असाध्यवर्णितायामपि साध्यत्वमाह—

भारप्रवाहमूर्च्छाभयशोकप्रमुखकारणान्नाड़ी।
संमूर्च्छिताऽपि गाढ़ं पुनरपि सा जीवितं धत्ते॥४९॥

---

मन्दा अनुल्वणा भवेत् वहेदित्यर्थः, तदा पञ्चभिर्दिवसैः पञ्चमे दिने, तस्य मृत्युः भवति, अन्यथा अन्यप्रकारः, एतद्विपर्य्ययः, न भवतीति शेषः ॥ ४७ ॥

एवमिति।—एवं संख्याऽऽदिभेदेन पूर्वोक्तप्रहरार्द्ध-सार्द्धप्रहर-त्रिचतुःपञ्चदिनादिनियमितसंख्याऽनुसारेण, "संख्याऽऽदिभेदेन" इत्यत्र "सूक्ष्मादिभेदेन" इति पाठान्तरम्; तत्र सूक्ष्मादिभेदेन पादाङ्गुलगतार्द्धाङ्गुलगतपादहीनाङ्गुलगतादि-सूक्ष्मातिसूक्ष्मस्थूलादिगतिभेदेनेत्यर्थः, विचक्षणैः पण्डितैः, नाड़ी ज्ञेया परीक्षणीया। विद्या नाड़ीपरीक्षाविद्या, स्वर्गेऽपि दुर्लभा दुष्प्रापा, अतः प्रयत्नतः गोपनीया रक्षणीया, यथा अनभ्यासात् न दुर्ज्ञेया भवेत्, तथा पालनीयेत्यर्थः ॥४८॥

स्पन्दनरहिताया नाड्या असाध्यत्वमुक्तं, तदपवादमाह, भार इति।—भारो गुरुत्वं, तस्य प्रवाहो जलप्रवाहादिवत् अविरतवहनमित्यर्थः, भारप्रवाहः इत्येकपदं चेत् तदा सुचिरकालं बहुभारवहनमित्यर्थः, मूर्च्छा धारावाहिरुधिरदर्शनेन अथवा विषादिवेगेन संज्ञाहीनता, भयं व्याघ्रादिदर्शनजन्यस्त्रासः, शोकः पुत्रस्त्रीधनादिविरहेण दुःखम्, एते प्रमुखा आदयो यस्य तत् तच्च तत् कारणं तस्मात्। "भयशोकप्रमुखकारणात्" इत्यत्र "भयशोकसमुत्थकारणा" इति पाठान्तरम्; गाढ़म् अतिमात्रम्, अतिशयेनेत्यर्थः, संमूर्च्छिताऽपि

**पतितः सन्धितो भेदी नष्टशुक्रश्च यो भवेत्।**
**शाम्यते विस्मयस्तस्य न किञ्चिन्मृत्युकारणम् ॥५०॥**

निस्पन्दनाड्यामपि मृत्योरपवादः।

**तथा भूताभिषङ्गे च त्रिदोषवदुपस्थिता।**

---

निस्पन्दाऽपि, सा असाध्यत्वेनाशङ्क्यमाना इत्यर्थः, नाड़ी पुनरपि जीवितं प्राणान्, धत्ते। कार्श्यनैश्चल्यादियोगे सत्यपि पुनः साध्यतां यातीत्यर्थः, भारप्रवाहादिकारणेन नाड्याः स्पन्दनानुभवविरहात् असाध्यत्वेन प्रतीयमानाया अपि तस्या नासाध्यताज्ञापकत्वमिति बोध्यम्। "भार" इत्यत्र "भाव" इति पाठे—अभिमतकामिन्या अलाभतः, भावानां रत्यादीनां प्रवाहः भावप्रवाह इति व्यासवाक्यं न युक्तं, भयशोकयोः पृथगभिधानात् श्लोके विनष्टो भावशब्द इति। प्रमुखेत्यनेन हेत्वन्तरं ज्ञेयं, तदप्यत्र श्रमपतनादिकं ग्राह्यम्। तदुक्तमन्यत्र— "बालानामतिमूढ़ानां मूकानामपि देहिनाम्। उन्मत्तानामभिन्यासप्रमूढ़मनसामपि॥ व्यस्तं समस्तं द्वन्द्वञ्च दोषरूपविशेषतः। शाम्यते विस्मयस्तस्य न किञ्चिन्मृत्युकारणम्॥" इति। "अजीर्णे वातरोगे च व्यायामे मैथुने श्रमे। तप्ताङ्गे चागमाक्रान्ते नाड्यव्यक्ता न मृत्युकृत्॥" इति च॥ ४९ ॥

पतित इति।—यो नरः पतित उच्चस्थानयानादितः प्रस्खलितः, सन्धा सन्धानं सञ्जाता अस्य इति सन्धितः भग्नास्थ्यादिसन्धानेन संहितः, भेदी अतिसारवान्, नष्टशुक्रः यक्ष्मादिना अतिरमणेन वा शुक्रक्षयवान्, भवेत्, तस्य विस्मयोऽसाध्यत्वानुमानं, शाम्यते नावतरति, निवर्त्तते इत्यर्थः, तत्र किञ्चित् मृत्युकारणं न, अस्तीति शेषः। पतनादिकारणेन यस्य नाड़ी संमूर्च्छिता निस्पन्दा भवति तस्य मृत्युशङ्का न स्यादित्यर्थः॥ ५० ॥

तथा भूतेति।—भूतानां देवग्रहादीनाम्, अभिषङ्गोऽभिहननं सम्बन्ध इत्यर्थः, तस्मिन् भूताभिषङ्गे देवग्रहादिजुष्टे, चकारात् सामा-

यद्यकस्मात् तथा नाड़ी न तदा मृत्युकारणम्॥५१॥
समाङ्गा वहते नाड़ी तथा च न क्रमं गता।
अपमृत्युर्न रोगाङ्गा नाड़ी तत्सन्निपातवत् ॥५२॥

---

ऽभिषङ्गे चेत्यर्थः, "भूतादावभिषङ्गे" इति पाठान्तरे,—भूतादिकृते आक्रमणे इत्यर्थः। आदिशब्दात् डाकिनीपूतनादीनि च ज्ञेयानि। नाड़ी यदि, अकस्मात् सहसा, त्रिदोषवदुपस्थिता आपाततः सन्निपातधर्म्मशालिनी भवति इत्यर्थः, तदा तदाऽपीत्यर्थः, तथा तादृशी, सन्निपातवदुपस्थिताऽपीत्यर्थः, न मृत्युकारणं न तु सन्निपातवत् मृत्युफलप्रदेति भावः। यद्वा—भूताभिषङ्गे नाड़ी यदि त्रिदोषवदुपस्थिता सती अकस्मात् तथा "लावतित्तिरिवार्त्तीक-गमनं सन्निपाततः" इत्याद्युक्तत्रिदोषगतिविशिष्टा, भवेदिति शेषः, तदाऽपि न मृत्युकारणम् ॥ ५१ ॥

मृत्युकारणाभावे हेतुमाह, समाङ्गेति।—अत्र यत् इति पद-मध्याहार्य्यं तच्छन्दसामर्थ्यात्, यत् यस्मात् भूताभिषङ्गे सन्निपातवत् सन्निपातगतिसमाना अपीत्यर्थः, नाड़ी समाङ्गा समानावयवा, सङ्कोचवैषम्यादिविरहिता इति भावः, तथाभूता सती वहते, तथा च किञ्च, क्रमं पारम्पर्य्यं, वातादिक्रमेण गमनस्वभावमित्यर्थः, न गता न अतिक्रान्ता, न व्यतिक्रमं प्राप्तेत्यर्थः। अयमेव सन्निपातादस्या भेदः, सन्निपाते नाड़ी असमाङ्गा वहते, वातपित्तादिक्रमञ्च अतिक्रामति, भूताभिषङ्गे तु सन्निपातस्य धर्म्मान्तरभाक् अपि तथा न वहते इति। तत् तस्मात्, सा नाड़ी, अपगतो मृत्युः मृत्युशङ्का यस्याः सा अपमृत्युः, मृत्युविरहिता, तथा रोगः अङ्गे यस्याः सा रोगाङ्गा, यद्वा,—रोगं रोगयुक्तम् अङ्गं यस्याः सा रोगाङ्गा रुग्णा इत्यर्थः, न भवतीति शेषः। वस्तुतस्तु सन्निपातवद्गतिविशिष्टाया अपि अस्याः सन्निपातज-त्वाभावात् न मृत्युकारणत्वमिति बोध्यम्। "समाङ्गा" इत्यत्र "समं या" "न रोगाङ्गा" इत्यत्र "अरोगाङ्गा" इति पाठान्तरं सुबोधं

**स्वस्थानहीने शोके च हिमाऽऽक्रान्ते च निर्गदाः ।**
**भवन्ति निश्चला नाड्यो न किञ्चित्तत्र दूषणम्॥५३॥**
**स्तोकं वातकफं दुष्टं पित्तं वहति दारुणम् ।**

---

बहुपुस्तकसम्मतश्च। तत्र भूताभिषङ्गे सन्निपातवदपि या नाड़ी समं समानं, प्राकृतगतिमित्यर्थः, वहते, तथा च या क्रमं न गता, सा नाड़ी। अत्र यच्छब्दसामर्थ्यात् तत् इति ऊहनीयम्। तत् तस्मादेव कारणात् समभावेन वहनादिकारणादित्यर्थः, अपमृत्युः मृत्युभयविरहिता, अरोगाङ्गा च अरोगाणि रोगरहितानि अङ्गानि यस्याः सा अरोगाङ्गा रोगविवर्जिता इत्यर्थः, भवतीति शेषः ॥ ५२ ॥

अन्यदाह, स्वस्थानेति।—स्वस्य स्थानं तस्मात् स्वस्थानात् स्वकीयतात्कालिकाऽऽवासरूपात्युच्चविषमादिस्थानात् हयगजोष्ट्ररथादितः इत्यर्थः, हीने पतने, [ केचित्तु स्वस्थानपदेन नाड्याः स्थानमङ्गुष्ठमूलमित्याहुः, तन्न। तथात्वे मृत्योरवश्यम्भावित्वात् "हन्ति च स्थानविच्युता" इत्युक्तेः, निर्गदा इति पदेन सङ्गत्यभावाच्च। वक्ष्यति चाग्रिमे द्वितीयश्लोके। ] शोके धनबन्धुवियोगादिजन्यदुःखे, हिमाक्रान्ते हिमादिसेवया अङ्गानाम् अतिशीतलत्वे सति, नाड्यो निर्गदा रोगशून्या अपि "हिमाक्रान्ते च निर्गदाः" इत्यत्र "हिमाक्रान्ते च निर्गताः" इति पुस्तकान्तरधृतः पाठः चिन्तनीयः। निर्नास्ति गतं गमनं स्वस्थानादन्यत्र चलनमिति यावत् यासां ताः निर्गताः स्थानस्था अपीत्यर्थः, एवं कष्टकल्पनया कथञ्चित् पाठस्यास्य सङ्गतिर्भवितुमर्हति न वा सुधीभिर्विभावनीयम्। निश्चलाः स्पन्दरहिता भवन्ति। तत्र स्वस्थानहीनादिकारणजे निश्चलत्वे, किञ्चित् किमपि दूषणं असाध्यत्वभ्रमजनितभयकारणमित्यर्थः, न, स्यादिति शेषः। उक्तञ्चान्यत्र—"विसूच्यां दृश्यते नैव नैव स्थानं विमुञ्चति" इति ॥ ५३ ॥

"पूर्वं पित्तगतिं प्रभञ्जनगतिम्" इत्यादिना उक्तस्य असाध्यलक्षणस्य

**पित्तस्थानं विजानीयाद् भेषजं तस्य कारयेत्॥५४॥**
**स्वस्थानच्यवनं यावद् धमन्या नोपजायते।**
**तदा तच्चिह्नसत्त्वेऽपि नासाध्यत्वमिति स्थितिः॥५५**

---

अपवादमाह, स्तोकमिति।—अत्र यस्येति पदमूहनीयं, तस्येति सामर्थ्यात्। यस्य आतुरस्य इत्यर्थः, वातश्च कफश्च द्वयोः समाहारः वातकफं, स्तोकम् अल्पं, दुष्टं प्रकुपितं सत्, वहति, कफवातनाड़ी किञ्चित् वहति अल्पत्वात्। दुष्टं पित्तं च काकाक्षिगोलकन्यायेन "दुष्टम्" इति उभयत्रापि अन्वेतव्यम्; दारुणं चीणाधिकत्वात्। द्वाभ्यामपि विशेषादुल्वणं यथा तथा वहति विषमवेगेण नाड़ीं वाहयतीत्यर्थः, अन्तर्भावितख्यर्थः, तमातुरं पित्तस्य स्थानमाश्रयस्वरूपं पित्तस्थानं पित्तप्रवलं विजानीयात्, न तु असाध्यमिति भावः, अतः तस्य भेषजं तत्प्रतीकारार्थं भेषजं कारयेत् कुर्य्यात्, औषधं दापयेत्, तस्य असाध्यता न स्यादिति भावः। अत्रेदं तात्पर्य्यम्;—स्वल्पदुष्टत्वेन चीणौ वातकफौ अपेक्ष्य अधिकदुष्टस्य पित्तस्य प्रबलवेगतया नाड़ी-परीक्षाकाले तस्य एव गतिरादावनुभूयते, वातकफयोः स्वल्पवेगत्वात् तदनु, एवञ्च "पूर्वं पित्तगतिम्" इत्याद्यनुसारेण असाध्यतां मत्वा तत्र भेषजदानमकर्त्तव्यं न मन्तव्यम्; यत्र तु तुल्यतया प्रकुपितदोष-त्रयस्य पूर्वं पित्तगतिः, तदनु वातगतिः, तदनु च कफगतिरनुभूयते नाड्यां, तत्रैवासाध्यता स्यात्, अत्र च चीणवातकफापेक्षया पित्तस्य प्राबल्यात् वातकफयोः प्रागेवानुभवात् तस्यानुभूतिः न चास्य त्रिदोषज-त्वम्, अतो नासाध्यता, भेषजकल्पना च कार्य्या इति॥ ५४॥

स्वस्थानच्यवनमिति।—यावत् यत्कालपर्य्यन्तं, धमन्याः नाड्याः स्वस्थानच्यवनं स्वस्थानमङ्गुष्ठमूलं तस्मात् च्यवनं च्युतिः, शनैः शनैरप-सरणम् इति यावत्, नोपजायते नोत्पद्यते, तदा तच्चिह्नस्य असाध्य-लक्षणस्य सत्त्वेऽपि विद्यमानतायामपि न असाध्यत्वमिति स्थितिः

मृत्युभयापवादः।

न विमुञ्चति स्वस्थानं नाड़ी सूक्ष्मा विभाव्यते।
तस्य मृत्युभयं नास्ति व्याधिरप्युपशाम्यति ॥५६॥

स्वस्थनाड़ीकथनम्।

सुव्यक्तता निर्म्मलत्वं स्वस्थानस्थितिरेव च।
अचाञ्चल्यममन्दत्वं सर्व्वासां शुभलक्षणम् ॥५७॥

---

नियमः, नासाध्यत्वं ज्ञेयमित्यर्थः, "हन्ति च स्थानविच्युता" इत्युक्त्या नाड्याः स्वस्थानच्यवनस्य प्रायशो मरणकालभावित्वात्, यावत् तन्न जायते तावत् बहुविधस्य असाध्यलक्षणस्य प्रादुर्भावे सत्यपि व्याधिं तमसाध्यं मत्वा तत्प्रतीकारपराङ्मुखता न युक्ता, बहुधा व्यभिचारदर्शनात्, उक्तञ्च,—"यावत् कण्ठगताः प्राणाः यावन्नास्ति निरिन्द्रियः। तावच्चिकित्सा कर्त्तव्या कालस्य कुटिला गतिः॥" इति। अन्यत्राप्युक्तं,—"कदाचिद् दुष्टारिष्टोऽपि जीवति" इति च। "तत्स्थचिह्नस्य" इति पाठे,—तत्स्थस्य नाड़ीगतस्य, चिह्नस्य असाध्यतासूचकस्य लक्षणस्येत्यर्थः॥ ५५॥

साध्यतामाह, नेति।—यस्य नाड़ी स्वस्थानम् अङ्गुष्ठमूलं, न विमुञ्चति न त्यजति, विविधासाध्यलक्षणोदयेऽपीति भावः, अपि च, सूक्ष्मा विशेषानुधावनेन सूक्ष्मतन्तुसदृशी अपीति भावः, विभाव्यते अनुमीयते, तस्य जनस्य मृत्युभयं नास्ति न विद्यते, प्रत्युत व्याधिरपि रोगोऽपि, उपशाम्यति निवर्त्तते, नाड्याः स्वस्थानस्थत्वात्॥ ५६॥

सुव्यक्ततेति।—सुव्यक्तता सुप्रकाशत्वम्; "दोषक्षयेण क्रमशः" इति पदद्वयं सर्व्वत्र योजनीयं, व्याधितनाड़ीप्रकरणे उल्लेखात् इति बोद्धव्यम्। अनायासेन ज्ञानं, निर्म्मलत्वं दोषादिलक्षणैस्तथा अजीर्णादिजनितलक्षणैश्चायुक्तत्वं, स्वस्थानस्थितिः अङ्गुष्ठमूलावस्थानम्। अचाञ्चल्यं चापल्यादिदोषविरहितत्वम्, अमन्दत्वं मन्थरभावादिरहितत्वं, सर्व्वासां

## दुष्टनाड़ीलक्षणम्।

रक्तं वमति सूक्ष्मत्वं स्वस्थानस्य विमोचनम्।
चाञ्चल्यं दोषपूर्णत्वं काठिन्यमतिमन्दता।
स्तैमित्यं गतिकौटिल्यं सर्व्वासां दुष्टलक्षणम्॥५८॥

---

वातादिगतिविशिष्टानां नाड़ीनामिति शेषः, शुभलक्षणं, भवतीति शेषः। अयमर्थः,—सन्निपातादावपि क्रमशः यद्येवंरूपा नाड़ी भवति, तदा आतुरस्य अचिरात् रोगमुक्तिर्भविष्यतीति ज्ञातव्यम्॥ ५७॥

विशेषरूपेण दुष्टानां नाड़ीनां लक्षणमाह, रक्तमिति।—रक्तं वमति या नाड़ी अतीव रक्तपूर्णतया नाड़ीं भित्त्वा उच्छलतीवेत्यर्थः, अत्र इवशब्द ऊहनीयः, अच्छिन्नाया नाड्या रक्तवमनासम्भवात्, नाड़ीगतिप्रदर्शनप्रसङ्गे आतुरस्य अवस्थाऽन्तरप्रदर्शनस्य अप्राकरणिकत्वाच्च इति बोद्धव्यम्; किं वा नाड्या अतीवरक्तपूर्णतया यदि आतुरः रक्तं वमति अतीवरक्तपूर्णतया प्रमाणातिक्रान्तं रक्तं शिरापथेनोर्द्धमागत्य मुखेनोद्गमति इत्येषा व्याख्याऽपि कथञ्चित् भवितुमर्हति। [अत्र वमनपदेन लक्षणया शरीरात् रक्तस्य वहिर्गमनं बोद्धव्यं; तेन यदि रक्तमुत्सरति मूलद्वारेणापि अधिकरक्तं निःसरति] तथा नाड्याश्च सूक्ष्मत्वं कृशता, स्वस्थानस्य अङ्गुष्ठमूलस्य विमोचनं त्यागः, चाञ्चल्यं गतेश्चापल्यं, दोषपूर्णत्वं दोषैः वातादिभिः पूर्णत्वं, काठिन्यं कोमलताराहित्यं, लगुड़ादिस्पर्शवत् स्पर्शवत्त्वमिति भावः, अतिमन्दता अतिशयेन मृदुगामित्वं, स्तैमित्यं स्तिमितता, जलसिक्तेव गुरुत्वयुक्तता श्लथगतिता वा इत्यर्थः, तथा गतिकौटिल्यं गतेः कुटिलता वक्रता, वक्रगामित्वमित्यर्थः; एतत् सर्वं सर्वासां, नाड़ीनामिति शेषः, दुष्टलक्षणं मन्दलक्षणं, भवतीति शेषः। एवंविधलक्षणप्रकाशे अवश्यमेव मृत्युरातुरस्य इति भावः॥ ५८॥

सुखसाध्या नाड़ी ।

**यदा यं धातुमाप्नोति तदा नाड़ी तथागतिः ।**
**तदा हि सुखसाध्यत्वं नाड़ीज्ञानेन बुध्यते ॥५९॥**
**नाड़ी यथाकालगतिस्त्रयाणां**
**प्रकोपशान्त्यादिभिरेव भूयः ॥ ६० ॥**

---

अन्यदपि सुखसाध्यलक्षणमाह, यदेति ।—यदा यस्मिन् समये, अपराह्णादौ इति यावत्, नाड़ी यं धातुं वातादिकम्; "धारणाद्धातवः" इत्युक्तेः वातादीनामपि धातुसंज्ञत्वात् इति; आप्नोति, तदा तस्मिन् काले, यदि तथागतिः धात्वनुसारिणी गतिरित्यर्थः, स्यादिति शेषः, तदा हि नाड़ीज्ञानेन नाड़ीनां ज्ञानमस्यास्तीति तेन, नाड़ीज्ञानवता भिषजेत्यर्थः, (अर्श-आदिभ्योऽच्; ५।२।१२७ पा०); यद्वा—ज्ञायते अनेनेति ज्ञानं शास्त्रं, नाड़ीज्ञानेन नाड़ीविज्ञानशास्त्रेणेत्यर्थः, अस्मिन् पक्षे बुध्यते इत्यत्र भिषग्भिरिति शेषः। नाड़ीं जानाति इति नाड़ीज्ञानः, (नन्दादित्वात् ल्युः) इति केचित् व्युत्पादयन्ति। सुखसाध्यत्वं बुध्यते अवगम्यते, तस्या नाड्या इति शेषः। अत्रायमाशयः,—पूर्वाह्णे कफस्य, मध्याह्णे पित्तस्य, अपराह्णे च वातस्य कालस्वभावादेव प्रकोपो भवति, तत्र वातप्रकोपकापराह्णादिकाले स्वभावानुसारेणैव उल्वणवाता नाड़ी यदि प्रथमं वातगत्या ततः यथाक्रमं पित्तकफगत्या वहति, तदा सुखसाध्यत्वं ज्ञातव्यम्; एवं पित्तकफयोः कालेऽपि बोद्धव्यम्। एतद्व्यतिरेकेण व्यतिरेकश्च इति ॥ ५९ ॥

एतस्यैव समर्थकं श्लोकान्तरमाह, नाड़ीति।—त्रयाणां वातादीनां भूयः पुनरपि, आवृत्त्या आवृत्त्या इत्यर्थः, प्रकोपशान्त्यादिभिः आदिपदेन सञ्चयादेः ग्रहणं, तेन सञ्चयप्रकोपप्रशमैरित्यर्थः, भूय इत्यनेन रात्रिदिनयोरुभयोरपि ग्रहणम्, एवञ्च प्रत्यूषसि श्लेष्मणः सञ्चयः, पूर्वाह्णे प्रकोपः, मध्याह्णे प्रशमः, पूर्वाह्णे पित्तस्य सञ्चयः, मध्याह्णे प्रकोपः, अपराह्णे

द्रव्यविशेषभक्षणे नाड़ीगतिमाह।

## पुष्टिस्तैलगुड़ाहारे मांसे च लगुड़ाऽऽकृतिः।

---

प्रशमः, मध्याह्ने वातस्य सञ्चयः, अपराह्ने प्रकोपः, पूर्वरात्रे प्रशमः, अपराह्ने श्लेष्मणः सञ्चयः, पूर्वरात्रे प्रकोपः, मध्यरात्रे प्रशमः, पित्तस्य पूर्वरात्रे सञ्चयः, मध्यरात्रे प्रकोपः, अपररात्रे प्रशमः, वातस्य मध्यरात्रे सञ्चयः, अपररात्रे प्रकोपः, पूर्वाह्ने प्रशमः इति। तथा च सौश्रुतमूले ऋतुचर्य्याऽध्याये—"तत्र पूर्वाह्ने वसन्तस्य लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्ने प्रावृषः, प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हेमन्तमुपलक्षयेत्; एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात्" इति। एवम् आवर्त्तनेन नाड़ी यथाकालं गतिर्यस्याः (सुपा सुप् (२।१।४ पा०) इति समासः) तादृशी चेत्, यः कालः यस्य दोषस्य प्रकोपसमयः तस्मिन् काले नाड्यामपि तद्दोषानुभवः, तदितरकाले तस्य शान्तिश्चेदित्यर्थः, भवेदिति शेषः, तदाऽपि सुखसाध्यत्वं नाड़ीज्ञानेन बुध्यते इति पूर्वेण सम्बन्धः। अयमर्थः,—वातपित्तकफानां त्रयाणां यो यः कालः प्रकोपकः तस्मिंस्तस्मिन् काले यदि नाड़ी तत्तद्गतिविशिष्टा भवति [ यथा—"वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च" इत्याद्युक्तकाले अपराह्णादौ नाड़ीपरीक्षणे कृते यदि प्रथममेव वायोर्गतिरनुमीयते, ततः पित्तगतिः, ततश्च कफगतिः अवबुध्यते, एवं पित्तकफयोः ] तदा तस्याः सुखसाध्यत्वं बोद्धव्यमिति॥ ६०॥

अथ आहारद्रव्यविशेषेण नाड्याः गतिविशेषमाह, पुष्टिरित्यादिद्वादशभिः।—तैलञ्च गुड़श्च तयोराहारः तस्मिन् ( सापेक्षत्वेऽपि गमकत्वात् आहारशब्देन समासः ) तैलम् इत्युपलक्षणं स्नेहमात्रस्य, तेन तैलघृतवसामज्जानः इति चतुर्णां ग्रहणम्; गुड़शब्दश्च मधुरफलरसमात्रस्य उपलक्षणम्। नाड्याः पुष्टिः स्थौल्यम्। एतत्तु भुक्तानां तेषां सम्यक् पाकाभावे सति ज्ञेयं, तेन अजीर्णसम्बन्धात्, कदाचित् काठिन्यमपि ज्ञेयम्। गुड़ाहारे तु किञ्चिज्जाड्येन सह पुष्टिः, तैले

**क्षीरे च स्तिमिता वेगा मधुरे भेकवद्गतिः ॥६१॥**
**रम्भागुड़वटाहारे रूक्षशुष्कादिभोजने।**
**वातपित्तार्त्तिरूपेण नाड़ी वहति निष्क्रमम् ॥६२॥**

केवला पुष्टिः, इत्यनयोर्भेदः अनुधावनीयः। मांसे मांसाहारे च, लगुड़ाकृतिः उच्छूनतया दण्डायमानत्वम्। क्षीरे क्षीराहारे, स्तिमिताः मन्दाः वेगाः गतयः इत्यर्थः। "स्तिमितावेगा" इति समस्तपाठे,—स्तिमितं मन्दं मन्दम् आवेगः प्रवाहः यस्याः सा तादृशी इति नाड्याः विशेषणं, तेन मन्दा गतिरित्यर्थः। केचित् तु "स्तिमिता मन्दा तथा अवेगा ईषद्वेगवती" इति पदद्वयमाहुः। मधुरे शर्करादौ, द्रव्ये चाद्रवे च इति भावः, भेकवत् गतिः, प्लवगतिरित्यर्थः। ननु प्लवगतिस्तु पित्त-प्रकोपात् भवति, "पित्तेन काकलावकभेकादिगतिं विदुः सुधियः" इत्युक्तेः, मधुरस्तु पित्तोपशमकरस्तदा कथमेवमुक्तम्? एवमन्यत्रापि यदुक्तं तदप्यसङ्गतं स्यात्? अत्र उच्यते,—मधुरस्य अम्लविपाकित्वेन अम्लस्य च पित्तकरत्वेन अत्यर्थसेवितस्य मधुरस्य अम्लपाकः, ततश्च पित्तवृद्धौ तथागतिरिति, किंवा द्रव्यस्वभावेनैव तथागतिः नाड़ीनां भवति, यद्वा—येन द्रव्येण यस्य शान्तिर्भवति, तस्याधिकसेवने तस्मादेव तस्योत्पत्तिर्भवति, यथा घृतम् अनलोत्पादकमपि अग्निमान्द्य-करम्। एवमुत्तरत्र ॥ ६१ ॥

रम्भेति।—रम्भा च गुड़श्च वटश्च, वटकस्तु पिष्टकविशेष इति, ते, तेषाम् आहारे, अत्र रम्भागुड़योः प्रत्येकं तथा मिलितयोरपि बोद्धव्यम्; केवलरम्भाहारे केवलगुड़ाहारे वा, मिलितरम्भागुड़ा-हारे वा तथा वटाहारे इत्यर्थः। "रम्भा च गुड़वटकश्च" इत्यपरः, रूक्षमस्नेहं, चूर्णविदलादि इति यावत्, शुष्कं स्निग्धमपि भर्जनरौद्रादिना कठिनं, चिपिटकादि इति यावत्, तदादिभोजने, आदिपदेन लघु-तीक्ष्णादीनां ग्रहणम्; नाड़ी वातपित्तार्त्तिरूपेण वातपित्तार्त्तौ वातपित्तगदे यद्रूपं तेन, "चञ्चला तरला, स्थूला कठिना वातपित्तजा"

याद्दग्रसभोजने याद्दशी नाड़ीगतिः ।

**मधुरे वर्हिगमना तिक्ते स्याद् भूलतागतिः ।**
**अम्ले कोष्णा प्लवगतिः कटुके भृङ्गसन्निभा ॥६३॥**
**कषाये कठिना म्लाना लवणे सरला द्रुता ।**

---

इति यदुक्तं तद्रूपेणेत्यर्थः । "वातपित्तार्त्तिरूपेऽपि" इति पाठान्तरम् । निष्क्रमं क्रमागतविपरीतं, कदा वा वातगतिः, कदा वा पित्तगतिः ; कदा वा पित्तगतिः, कदा वा वातगतिः, इत्येवं गतेः पौर्व्वापर्य्यविपर्य्ययेणापीत्यर्थः, मिश्रत्वेन मिश्रधर्म्मवत्त्वादित्यर्थः, तद् यथा तथा, वहति । ननु पूर्वं गुड़ाहारे पुष्टिरुक्ता, अत्र पुनः वातपित्तगतिरित्युक्तं, तत् कथम् ? उच्यते—गुड़ाहारे यथा पुष्टिः, तथा वातपित्तार्त्तिगतिरपि जायते, समयभेदेन कदाचित् किञ्चिदिति ॥ ६२ ॥

इदानीं रसविशेषसेवने नाड्या गतिविशेषज्ञानमाह, मधुर इति ।—मधुरे मधुररसोपयोगे, वर्हौ मयूरः तद्वत् गमनं यस्याः तथाभूता, मधुरस्य कफकारकत्वात्, कफे च "राजहंसमयूराणाम्—" इत्याद्युक्तेः मयूरवद्‌गतिर्जायते इत्यर्थः । तिक्ते तिक्तरसवद्द्रव्यसेवने, भूलता किञ्चुलकः, तद्वत् गतिः स्यात्, तिक्तस्य वातवर्द्धकत्वात्, वाते च तथागतिकत्वादिति । तिक्ते कषायत्वमपि किञ्चिदस्तीत्यनुभूयते इति । अम्ले अम्लभोजने, कोष्णा ईषदुष्णा तथा प्लवगतिः भेकगमना, अम्लस्य पित्तवर्द्धकत्वात् पित्तस्य च तथागतिकत्वादिति भावः । कटुके कटुरसवद्द्रव्यसेवने, भृङ्गः कुलिङ्गविशेषः, "भृङ्गः कुलिङ्गो धूम्याटो दार्वाघातः शतच्छदः" इति राजनिघण्टुः । "फिङ्गा" इति प्रसिद्धः, तत्सन्निभा तत्सदृशगतिशालिनीत्यर्थः ; कटुरसस्य वातवर्द्धकत्वात् वाते च तथागतिकत्वादिति भावः ॥ ६३ ॥

कषाय इति ।—कषाये कषायरसवद्‌द्रव्यभक्षणे, नाड़ी कठिना लगुड़ादिस्पर्शवत् कठिनस्पर्शा, तथा म्लाना जड़ा, लवणे लवणरस-

एवं द्वित्रिचतुर्योगे नानाधर्मवती धरा ॥६४॥

बहुरसाद् नाड़ीगतिः।

स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥६५॥
कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम्।
कटुतिक्तकषायाश्च कोपयन्ति समीरणम् ॥६६॥

प्रसङ्गात् रसस्वरूपमाह—

कटुतिक्तकषायाणां विपाकः प्रायशः कटुः।
अम्लोऽम्लं पच्यते स्वादुर्मधुरो लवणस्तथा ॥६७॥

---

सेवने, सरला परितो ग्रन्थिजाड्यादिरहिता इत्यर्थः, तथा द्रुता द्रुतगामिनी। एवञ्च एतद्गतार्थत्वञ्च निर्णीताजीर्णस्यैव वक्तव्यम्। एवं द्वित्रिचतुर्योगे द्वित्रिचतूरससंयोगाहारे, धरा नाड़ी, नानाधर्म्मवती नानाधर्म्मशालिनी, वह्निगमनादिनानाविधगतिविशिष्टेत्यर्थः, ज्ञेयेति शेषः ॥ ६४ ॥

प्रसङ्गात् रसादीनामपि वाय्वादिविनाशकतां तत्प्रकोपकताञ्चाह, स्वाद्वम्ललवणा इति।—एते स्वाद्वम्ललवणाः रसाः वायुं जयन्ति, कषायस्वादुतिक्तकाः पित्तं जयन्ति, कषायकटुतिक्तकाः श्लेष्माणं जयन्ति ॥ ६५ ॥

कट्विति।—कट्वम्ललवणा रसाः पित्तं कोपयन्ति कोपं प्रापयन्ति, स्वाद्वम्ललवणा रसाः कफं, तथा कटुतिक्तकषाया रसाः समीरणं वायुं कोपयन्ति ॥ ६६ ॥

विपरिणाममाह कटुतिक्तकषायाणामिति।—कटुतिक्तकषायाणां रसानां विपाकः परिणामः, प्रायशः बाहुल्येन, कटुः भवतीति शेषः। प्रायश इत्यनेन कदाचित् अन्यथापाकोऽपि भवतीति बोधयति,

मधुरो लवणोऽम्लश्च स्निग्धभावास्त्रयो रसाः।
वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः॥६८॥
कटुतिक्तकषायाश्च रूक्षभावास्त्रयो रसाः।
दुःखानि मोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम्॥६९॥

प्रसङ्गात् द्रव्याणामपि रसधर्मत्वमाह।

मधुरं श्लेष्मलं प्रायो जीर्णात् शालियवादृते।

---

तद्यथा—कट्वादयः रसा विपाके प्रायशः कटवः पच्यन्ते ( कर्म्मकर्त्तरि लट् ) अम्लः अम्लं पच्यते, अम्लपाकि भवति, मधुरो लवणश्च स्वादुः पच्यते॥ ६७॥

मधुर इति।—मधुरादयस्त्रयः रसाः स्निग्धभावाः स्निग्धाः, अतः वातमूत्रपुरीषाणां मोक्षे त्यागविषये, प्रायः सुखाः सुखकराः, मताः ज्ञेया इत्यर्थः। मधुरादयस्त्रयः स्निग्धत्वात् वातानुलोमनाः, तस्मादेते मलादीनां मोक्षे सुखदा इति गुरवः॥ ६८॥

कट्विति।—कटुतिक्तकषायास्त्रयो रसा रूक्षभावाः रूक्षधर्म्माणः, इत्यस्मात् वातमूत्रपुरीषाणां मोक्षे त्यागे दुःखानि दुःखजनकानि दृश्यन्ते, रूक्षाणां वातसमानधर्म्मिणामेषां वातप्रकोपकत्वेन अनुलोमन-शक्तिविरहादिति॥ ६९॥

मधुरादीनां श्लेष्मादिवर्द्धनत्वे अपवादमाह, मधुरमिति।—जीर्णात् पुरातनात्, संवत्सरातीतादिति यावत्, "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते" इति चरकवचनात्, किञ्च, "धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम्। तत्तु वर्षोषितं पथ्यं यतो लघुतरं हितम्॥ वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति। न तु त्यजति वीर्य्यं स्वं क्रमामुञ्चत्यतः परम्॥" इति भावप्रकाशधृतवाग्भटवचनाच्च। शालयश्च यवाश्च तस्मात् शालियवात् ("विभाषा वृक्षमृगतृणधान्य—" (२।४।१२ पा०) इत्यादिना द्वन्द्वैकवद्भावः) तेन शालिभ्यो यवेभ्यश्च इत्यर्थः, तत

**मुद्गाद् गोधूमतः चौद्रात् सिताया जाङ्गलामिषात्।**
**प्रायोऽम्लं पित्तजननं दाड़िमामलकादृते ॥७०॥**

---

शालिः "कण्डनेन विना शुक्ला हैमन्ताः शालयः स्मृताः" इत्युक्तलक्षण-हैमन्तिकशुक्लतण्डुलरक्तशालिकलमादिधान्यविशेषः, यवः प्रसिद्धः, तस्मात् यवात्, तथा मुद्गात्, गोधूमतः गोधूमात्। अत्र मुद्गगोधूमावपि जीर्णौ बोद्धव्यौ। "शूकधान्यम्" इत्यादिपूर्वोक्तवचनात्, "पुराणयवगोधूम-चौद्रजाङ्गलशूल्यभुक्" इति वसन्तचर्य्यायां वाग्भटोक्तेश्च। चौद्रात् मधुनः, सितायाः शर्कारायाः, जाङ्गलामिषात् जाङ्गलः जाङ्गलो देशः, तल्लक्षणं यथा चरके—"अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः। ज्ञेयः स जाङ्गलो देशः स्वल्परोगतमोऽपि च॥" इति। किञ्च, वाग्भटेऽप्युक्तं यथा—"आकाशः शुभ्र उच्चश्च स्वल्पपानीयपादपः। शमीकरीरविल्वार्क-पीलुकर्कन्धुसङ्कुलः॥ हरिणैणर्चपृषतगोकर्णखरसङ्कुलः। सुस्वादुफल-वान् देशो वातलो जाङ्गलः स्मृतः॥" अन्यच्च—"जाङ्गलोऽल्पाम्बुशाखी च पित्तासृङ्मारुतोत्तरः॥" इति। तत्र यत् आमिषं "पृषतः शरभो वामः श्वदंष्ट्रा मृगमातृका। शशोरणौ कुरङ्गश्च गोकर्णः कोट्टकारकः॥ चारुष्को हरिणैणौ च शम्बरः कालपुच्छकः। ऋष्यश्च तरपोतश्च विज्ञेया जाङ्गला मृगाः॥" इति चरकोक्तमृगाणां मांसं तस्मात् जङ्गलदेशज-जन्तुमांसात्, ऋते विना, मधुरं मधुररसवद्‌द्रव्यं, प्रायः प्रायशः। अत्र प्रायःपदेन उक्तादन्यान्यपि कानिचिद्‌द्रव्याणि मधुराण्यपि न श्लेष्मलानि भवन्ति, इति सूचितं, यथा—मसूरत्रिपुटादीनि कानिचित्तृणधान्यानि च मधुराण्यपि श्लेष्मप्रशमनानि भवन्ति इति। श्लेष्मलं श्लेष्मकरं, ज्ञेय-मिति शेषः। दाड़िमामलकात् (अत्रापि पूर्ववत् "फलसेनावनस्पति—" इत्यादिना द्वन्द्वैकवद्भावः) ऋते प्रायोऽम्लम् अधिकांशम् अम्लद्रव्यं, पित्तजननं पित्तकरमिति। अत्रापि प्रायःपदस्य पूर्ववदभिप्रायो-ऽवगन्तव्यः, यथा—निम्बूकक्षुद्रबदरादीनि कानिचिदम्लद्रव्याणि न पित्त-लानि, अपि तु पित्तघ्नानि इति॥ ७०॥

द्रवेऽतिकठिना नाड़ी कोमला कठिनाशने ।
द्रवद्रव्यस्य काठिन्ये कोमला कठिनाऽपि च ॥७१॥
अम्लैश्च मधुराम्लैश्च नाड़ी शीता विशेषतः ।
चिपिटैर्भृष्टद्रव्यैश्च स्थिरा मन्दतरा भवेत् ।
कूष्माण्डैर्मूलकैश्चैव मन्दमन्दा च नाड़िका॥७२॥

---

इदानीं द्रव्यविशेषसेवनेन नाड्या अवस्थाविशेषमाह, द्रव इति ।—द्रवे द्रवसामान्ये, सेविते सति इति शेषः, नाड़ी अतिकठिना कठिनस्पर्शा, लगुड़ादिस्पर्शवदिति भावः, उच्छूनतया दण्डायमाना इत्यर्थो वा। कठिनाशने कठिनद्रव्यभोजने, नाड़ी कोमला मृदुस्पर्शा, भवतीति शेषः। द्रवद्रव्यस्य काठिन्ये शोषणादिना घनत्वसम्पादनादिना वा संहतीभावे सति, उपायविशेषेण स्वतो या कठिनीभूतं द्रवं यदि भुङ्क्ते तदा इत्यर्थः, नाड़ी कोमला कठिनाऽपि च, भवतीति शेषः, आदौ कोमलत्ववती पश्चात् कठिनत्वान्विता, कदाचित् कोमलत्वयुता कदाचित् कठिनत्ववती इति वा अनुभूता भवति इत्यर्थः। अथवा कर्द्दमान्तर्गतेष्टकादिखण्डवत्, स्पर्शमात्रेण कोमलत्वोपलब्धिः, पश्चात् किञ्चित् पीड़नेन आन्तरी काठिन्योपलब्धिरिति गुरवः ॥ ७१ ॥

अम्लैश्चेति।—अम्लैः अम्लरसैः, अत्राम्लशब्देन दाड़िमामलकादीनामम्लरसवद्द्रव्याणां ग्रहणं बोद्धव्यं, तेषामेव शीतादिवीर्य्यत्वादपित्तलत्वेन नाड्या अपि शीतत्वं बोद्धव्यम्, अन्यथा, "अम्ले कोष्णा प्लवगतिः" इति स्वोक्तिविरोधादिति, तथा मधुराम्लैः अम्लमधुरद्विरसवद्द्रव्यैरित्यर्थः, नाड़ी विशेषतो विशेषेण, शीता शीतलस्पर्शा, भवेदिति परेणान्वयः। एवं चिपिटैः चिपिटकाख्यैः भृष्टकुट्टितधान्यविकारैरित्यर्थः, भृष्टद्रव्यैश्च चिपिटभृष्टद्रव्ययोः भक्षणैर्नाड़ी स्थिरा अचञ्चला, तथा मन्दतरा अतिशयेन मृदुगामिनी चेत्यर्थः, भवेत्। कूष्माण्डैर्मूलकैः कूष्माण्डमूल-

**शाकैश्च कदलैश्चैव रक्तपूर्णेव नाड़िका ।**
**मांसात् स्थिरवहा नाड़ी दुग्धे शीता बलीयसी॥७३**
**गुड़ैः क्षीरैश्च पिष्टैश्च स्थिरा मन्दवहा भवेत् ।**
**गुड़रम्भामांसरूक्षशुष्कतीक्ष्णादिभोजनात् ।**
**वातपित्तार्त्तिरूपेण नाड़ी वहति निश्चला ॥७४॥**

---

कयोर्भक्षणैः नाड़िका मन्दमन्दा अत्यर्थं मन्दगामिनी, हंसदन्तिविशिष्टेत्यर्थः, भवतीति शेषः ॥ ७२ ॥

शाकैरिति ।—शाकैः "पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा । शाकं षड्विधमुद्दिष्टं गुरु विद्यात् यथोत्तरम् ॥" इत्युक्तपत्रपुष्पादिरूपशाकसामान्यैः, कदलैश्च कदलीफलैश्च, नाड़िका नाड़ी, रक्तपूर्णेव "असृक्पूर्णा भवेत् कोष्णा गुर्वी" इत्युक्त्या ईषदुष्णा गुर्वी च सतीत्यर्थः, वहतीति शेषः । मांसात् मांसाहारात्, नाड़ी स्थिरवहा स्थिरम् अचञ्चलं वहति या सा तथाभूता, भवतीति शेषः, "मांसे च लगुड़ाकृतिः" इति पूर्वोक्तत्वात् उच्छूनतया :स्थिरत्वमवगन्तव्यं परिपूर्णभाण्डादेरिव । एकस्यैव प्रतिपाद्यस्य शब्दवैपरीत्येन पुनःपुनरुक्तिस्तु विविधप्रकारोपदेशद्वारा शिष्याणां बोधसौकर्य्यार्थम्, अथवा मनुष्यप्रकृतीनां नैकविधत्वात् प्रकृतिभेदेन :गतिभेदोऽवगन्तव्यः । उत्तरत्रापि अनुरूपस्थले एवमेव समाधेयम् । दुग्धे दुग्धाहारे ; शीता शीतस्पर्शा, बलीयसी बलवत्तरा च, पूर्वं "क्षीरे च स्तिमिता वेगाः" इत्युक्तं, तेन बलीयसी अपि नाड़ी शीतस्पर्शा मन्दगामिनी च भवति, न तु बलवत्त्वेन उष्णत्वं चञ्चलत्वं वा भजते इति । ज्ञेया इति शेषः ॥७३॥

गुड़ैरिति ।—गुड़ैः, क्षीरैः दुग्धैः, पिष्टैः पिष्टकैश्च, नाड़ीति पूर्वतः आकर्षणीयम् ; स्थिरा चाञ्चल्यविवर्ज्जिता, तथा मन्दवहा मृदुगामिनी भवेत्, गुड़ादिभोजनैः नाड़ी स्थिरा सती मन्दं मन्दं वहति इत्यर्थः, गुड़क्षीराभ्यां नाड्याः पुष्टित्वं तथा वेगस्तैमित्यञ्च

**अम्ले ऽपि हृद्यसुस्थत्वे भवन्ति तापिताः शिराः॥७५॥**

प्रातरादौ सुस्थनाड़ीज्ञानम्।

**प्रातः स्निग्धमयी नाड़ी मध्याह्नेऽप्युष्णताऽन्विता।**
**सायाह्ने धावमाना च रात्रौ वेगविवर्जिता।**

---

प्रागभिहितम्, अत्र च स्थिरा मन्दवहा इत्युक्तेरेवमवगम्यते यत्, गुड़ाहारे पुष्टा अपि स्थिरा मन्दवहा, तथा क्षीराहारे स्तिमितवेगा सत्यपि स्थिरा मन्दवहा भवेत् इति बोध्यम्। एषां गुड़ादीनां कफप्रकोपकत्वात् गतेर्मान्द्यं बोध्यम्। गुड़ः रम्भा कदलीफलं मांसं रूक्षम् अस्निग्धं, विदलादीति यावत्, शुष्कं स्निग्धमपि भर्जनादिना निर्द्रवं निःस्नेहञ्च, चिपिटकादीति यावत्, तीक्ष्णं राजिकामरिचादि, आदिशब्दात् भृष्टविदाहि द्रव्यमिति, तेषां भोजनात् वातपित्तार्त्तिरूपेण वातपित्ताभ्यां पीड़ितरूपेण, "चञ्चला तरला स्थूला कठिना वातपित्तजा" इति तथा "मुहुः सर्पगतिर्नाड़ी मुहुर्भेकगतिस्तथा" इत्याद्युक्तप्रकारेणेत्यर्थः, अत्र गुड़ादीनां द्विशः त्रिशः समस्तशो वा ऐकध्यं भोजनं बोद्धव्यं, प्रत्येकं भोजने तु पूर्वोक्तिविरोधात् इति। नाड़ी निश्चला निर्निश्चयेन, चला चञ्चला, अत्यर्थं चञ्चला सतीत्यर्थः, ("निर्निश्चयनिषेधयोः" इत्यमरः)। "निश्चला" इत्यत्र "निष्क्रमम्" इति पाठान्तरं साधु, तच्च प्रागेव द्विषष्टितमसंख्यकश्लोके व्याख्यातम्। वहति गच्छतीत्यर्थः॥ ७४॥

अम्लेऽपीति।—अम्ले अम्लरसभोजने, हृदि असुस्थत्वे दाहोत्क्लेशादिरुजायाम्, अपिशब्दात् सुस्थत्वेऽपीति बोध्यं, दाहादिरुजाऽभावेऽपि सतीत्यर्थः, शिरा नाडाः तापिता उष्णाः, भवन्ति, अम्लरसभोजनेन हृदयमस्वस्थं भवतु वा, न वा, नाड़ीषु औष्ण्यानुभवो भवत्येवेत्यर्थः॥७५॥

अथ प्रकृतिस्थाया नाड्या लक्षणमाह, प्रातरिति।—प्रातः पूर्वाह्णे, नाड़ी स्निग्धमयी स्निग्धस्वरूपा, उष्णताचाञ्चल्यादिविरहितेत्यर्थः; पूर्वाह्णस्य कफकालत्वात् प्रातर्दशदण्डपर्य्यन्तं नाड़ी स्निग्धा तिष्ठती-

**प्रकृतिस्था च सा नाड़ी सदा ज्ञेया भिषग्वरैः॥७६**

ज्वरपूर्वरूपे नाड़ीगतिः।

**अङ्गग्रहेण नाड़ीनां जायन्ते मन्थराः प्लवाः।**
**प्लवः प्रबलतां याति ज्वरदाहाभिभूतये॥ ७७॥**

---

त्यर्थः, एवं मध्याह्ने उष्मताऽन्विता सन्तापयुक्ता, उष्णा इत्यर्थः, मध्याह्नस्य पित्तकालत्वात् पित्तस्य च आग्नेयत्वात् तदा नाड़ी पित्तलक्षणसन्तापयुक्ता इति यावत्, तथा सायाह्ने अपराह्ले, धावमाना द्रुतगामिनी; अपराह्नस्य वातकालत्वात् वायोश्च चलत्वात् नाड़ी द्रुतगतिका जायते इत्यर्थः, रात्रौ वेगविवर्जिता मन्दगमना, नैशशैत्यात् कर्म्मविरतेः सुखनिद्रया च चित्तोद्वेगाद्यभावात् इति भावः, सा एवम्भूता नाड़ी प्रकृतिस्था स्वभावधर्म्मशालिनीत्यर्थः, भिषग्वरैः सदा ज्ञेया बोध्या॥ ७६॥

अथ कारणभेदेन नाड़ीनां विविधप्रकारगतिं तद्दर्शनेन साध्यासाध्यत्वादिकञ्च निरूप्य इदानीं गतिभेदेन रोगविशेषनिरूपणाय शारीराणां रोगाणां ज्वरस्यैव प्रथमतया प्राधान्यात् आदौ ज्वरनिरूपणे तत्पूर्वरूपे नाड्या गतिविशेषमाह, अङ्गग्रहेणेति।— अङ्गग्रहेण अङ्गवेदनया, हेतुना, उत्पत्स्यमाने ज्वरे यदि सर्वाङ्गे वेदना भवति, तदा, "जृम्भाऽङ्गमर्द्दो गुरुता" इत्याद्युक्तेः, नाड़ीनां प्लवाः प्लुतगतयः, कपिभेकादिवत् उत्प्लुत्य उत्प्लुत्य गमनमित्यर्थः, प्लवाः मन्दाः, चिरं विरम्य विरम्य अनुद्रता इत्यर्थः, जायन्ते, मन्थरा भेकादिवत् उत्प्लुत्य उत्प्लुत्य गमनं नाड्या मन्दतया अनुभूयते इत्यर्थः। "प्लवाः" इत्यत्र बहुवचनेन चिरं विरम्य विरम्य अनुद्रततया च बहुवारं गच्छतीति सूच्यते, लक्षणञ्चेदं पूर्वरूपावस्थायां सामान्यतोऽङ्गग्रहणे बोद्धव्यं, न तु विशेषतः, तस्य च "खेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा। युगपत् यत्र रोगे च स ज्वरो व्यपदिश्यते॥" इत्यनेन ज्वरस्य स्वरूपलक्षणत्वात् इति। भाविदाहज्वरसूचकं गतिविशेष-

सान्निपातिकपूर्वरूपे नाड़ीज्ञानम्।

**सान्निपातिकरूपेण भवन्ति सर्ववेदनाः॥ ७८॥**

---

माह।—ज्वरदाहाभिभूतये ज्वरदाहाभ्यां दाहज्वरेण वा, अभिभूतये अभिभूतिनिमित्तम्, आक्रमणायेत्यर्थः, ज्वरपूर्वरूपे प्लवः प्लुतगतिः, प्लवः नाड्या भेकादिवत् गमनं, प्रबलतामाधिक्यम्, उत्कटतया धारावाहिरूपतामित्यर्थः, याति प्राप्नोति, अङ्गग्रहरूपसामान्यपूर्वरूपे हि नाड्यः चिरं विरम्य विरम्य अनुद्धतभावेन मन्दतया गच्छन्ति, अत्र पुनः दाहज्वरपूर्वरूपे हि नाड़ी निरन्तरं प्रबलवेगेन तीव्रगत्या च प्लवते इत्यनयोर्भेदः। "प्लवाः" इत्यस्यायमाशयः,—"उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्॥" इत्युक्त्या सर्वेष्वेव हि ज्वरेषु अव्यभिचरितपित्तसम्बन्धात् तत्तज्ज्वरेष्वपि भेकादिवत् प्लुतगतित्वं स्वल्पेनाधिक्येन वा वर्त्तत इति॥ ७७॥

सान्निपातिकज्वरस्य प्राक् प्रकाशात् नाड्या गतिविशेषमाह, सान्निपातिकरूपेणेति।—सान्निपातिकरूपेण चीणानां वृद्धानां वा त्रयाणां दोषाणां मेलनं सन्निपातः, यदुक्तं वाग्भटेन—"संसर्गः सन्निपातश्च तद्द्वित्रिचयकोपतः" इति। स च सन्निपातः त्रयोदशविधः, यदुक्तं चरकेण—"द्वाल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्। समैश्चैको विकारास्ते सन्निपातास्त्रयोदश॥" इति; तेन, दोषत्रयमेलनेन जातः सान्निपातिकः तद्रूपेण, त्रिदोषात्मकतया इत्यर्थः, प्रकाशिष्यमाणे ज्वरे इति शेषः, सन्निपातलक्षणस्य प्राक् प्रकाशात् इत्यर्थः, सर्वाः सर्वविधाः, वेदनाः दुःखानि, विकारा इत्यर्थः, उरगलावकहंसादिगमनरूपा इति यावत्, यद्वा—सर्व्वेषां दोषाणां त्रयाणां, वेदनाः ज्ञानानि, ("वेदना ज्ञानदुःखयोः" इति मेदिनी) उरगादिवद्गतिदर्शनेनेति भावः, तथा च,—"उरगादि-लावकादि-हंसादीनाञ्च बिभ्रती गमनम्। वातादीनाञ्च समं धमनी सम्बन्धमाधत्ते॥ लावतित्तिरिवार्त्तकगमनं

ज्वरसंप्राप्तौ नाड़ीगतिः ।

**ज्वरप्रकोपे धमनी सोष्णा वेगवती भवेत् ॥ ७९ ॥**

वायुप्रवणज्वरे नाड़ीगतिः ।

**ज्वरे वक्राश्च धावन्ति तथा च मारुतप्लवे ॥ ८० ॥**

---

सन्निपाततः ॥" इति । भवन्ति नाड्यामिति शेषः, यद्वा—सान्निपातिकरूपेण सान्निपातिकस्य यद्रूपं नाड्याः सर्पादिगतिरूपं तेन तद्वहनेनेत्यर्थः, सान्निपातिकलक्षणे नाड्या प्रवहमाणे सति इत्यर्थः, सर्ववेदनाः निखिलज्ञानानि, सान्निपातिकज्वरस्य "क्षणे दाहः" इत्यादिरूपापरिज्ञानेऽपि एवमेवं लक्षणानि जनिष्यन्ते इत्याकारज्ञानानीत्यर्थः । यत्तु केनचित्—"सर्वाः दोषत्रयस्य याः याः वेदनाः शोषचोषादयः ताः सकला एव वेदनाः भवन्ति पर्वणि पर्वणि जायन्ते" एवं व्याख्या कृता, तत्तु चिन्त्यम् ; नाड़ीविज्ञानप्रकरणे कायिकवेदनानिर्देशस्य अप्राकरणिकत्वात् । केचित्तु—"सर्ववेदनाः नानावेदनापराः" इत्याहुः ॥७८॥

अथ ज्वरस्य रूपावस्थायां नाड्या गतिविशेषमाह, ज्वरप्रकोप इति ।—ज्वरप्रकोपे ज्वरस्य रूपे प्रकाशे सति इत्यर्थः, न तु अम्लादिपित्तवर्द्धकाहारे इति भावः, तत्रापि धमन्याः सोष्मत्वात्, यदुक्तम्—"अम्ले कोष्णा प्लवगतिः" इति । "उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना । उष्णा वेगधरा नाड़ी ज्वरवेगे प्रजायते ॥" इत्युक्त्या पित्तस्य उष्महेतुत्वात् अम्लाशनस्य च पित्तकरत्वात् अम्लभोजनेऽपि नाड्यामुष्मानुभवो जायते, यदुक्तम्—"अम्लाशित्वादसुस्थत्वे जायन्ते तापिताः शिराः" "अम्ले कोष्णा प्लवगतिः" इत्यादि । ज्वरेऽपि पित्तसम्बन्धस्य अव्यभिचरितत्वात् ज्वरेऽम्लसेवने च उष्मरूपधर्मस्य समत्वात् तयोर्भेदज्ञापनार्थं वेगवतीति विशेषणं निर्दिष्टं, "ज्वरवेगे च" इति पाठान्तरम् । सा धमनी नाड़ी, उष्णा सन्तप्ता, "सोष्मा" इति पाठे—उष्मणा सह वर्त्तमाना इत्यर्थः, वेगवती द्रुतगमना च भवेदित्यर्थः ॥७९॥

ज्वरविशेषे नाड्याः गतिविशेषमाह, ज्वर इति ।—ज्वरे ज्वरवेगे,

रमणान्तकालीननाड़ीगतिः।

रमणान्ते निशि प्रातस्तप्ता दीपशिखा यथा॥८१॥

वातिकज्वरवेगे इति भावः, "वक्रम्" इति पदसामर्थ्यात्, वक्रं सर्पादिगमनवत् अनृजु यथा तथा, चकारात् उष्णाः वेगवत्यश्च इत्यर्थः, उष्णा वेगवत्यश्च नाड्यः वक्रं यथा तथेत्यन्वयः; "वक्रा" इति पाठान्तरम्। धावन्ति शीघ्रगमना भवन्ति इत्यर्थः, नाड्यः इति शेषः। मारुतप्लवे "प्लु गतौ" इत्यस्मात् भावविहिताप्प्रत्यये प्लवः गतिरित्यर्थः, मारुतस्य प्लवे वृद्धिरूपगतिविशेषे इत्यर्थः, वातोद्रेके इति यावत्, च अप्यर्थः, तथा पूर्ववत् वक्रं यथा तथा धावन्ति। अत्र वक्रधावनसामान्यात् प्रसङ्गतो मारुतप्लवे इत्युक्तं, ज्वरे च उष्णानुभवात् वाताद्भेदः, वाते तु नाड्या अतिशयवक्रता तथा उष्णताऽभावः। यद्वा—मारुतप्लवे वातप्रवणे, वाताधीने इत्यर्थः, ("प्लवः स्यात् प्लवने भेले भेकेऽवो श्वपचेऽपि च। शाखामृगे च कुलके प्रवणे—"॥ इति मेदिनी) ज्वरे, च चकारः समुच्चये, वक्रं, तथा च उष्णा वेगवत्यश्च इत्यर्थः॥८०॥

उष्णत्वसामान्यात् रमणान्तकालिकगतिविशेषमाह, रमणान्ते इति।—रमणान्ते मैथुनानन्तरं, निशि अवशिष्टायां तस्यामेव निशायाम्; निशि इत्यनेन दिवामैथुनं निषिद्धमिति द्योतयति; तथा प्रातः तस्या एव निशाया अवसाने प्रातरपीत्यर्थः, तप्ता उष्णा। ननु ज्वरे रतान्ते च उभयत्रापि उष्मदर्शनात्, अयं ज्वरोष्मा, अयं सौरतोष्मा इति भेदः कथं ज्ञायते? इत्यत आह,—दीपशिखा यथा दीपशिखा इव, तप्ता, नाड़ी भवति इति शेषः। तप्ता दीपशिखा यथा वेगमन्तरेणापि निष्कम्पतया वर्त्तते, रमणान्तकालिकी तप्ता नाड़ी तथा वहति, ज्वरतप्ता च नाड़ी सवेगा धावतीत्यनयोरियान् विशेषः। "दीपशिखोपमा" इति पाठे—"अग्रे चपला भवति" इति गोविन्दरामीया व्याख्या। अत्र रमणान्ते निशि रमणान्ते प्रातश्च इत्येवान्वयः, न तु रमणान्ते च निशि च प्रातश्चेत्यन्वयः, प्रातः स्निग्ध-

समतीव्रवायौ नाड़ीगतिः।

**सौम्या सूक्ष्मा स्थिरा मन्दा नाड़ी सहजवातजा।**
**स्थूला च कठिना शीघ्रा स्पन्दते तीव्रमारुते॥८२॥**

---

मयीति विरोधात्; "ज्वरावच्छेदेनैव समस्तान्वय इत्येके। तस्य च वातादिजन्यत्वसामान्यं तावत् उक्तलिङ्गैरेवावगन्तव्यम्" इति शङ्करसेनः॥ ८१॥

वातज्वरे नाड्या गतिविशेषमाह, सौम्येति।—सहजवातजा सहोत्थवातिकी, निदानसेवनसमकालिक-प्रवर्द्धमान-वातज्वरजन्येत्यर्थः, अत्र सहजत्वन्तु तीव्रापेक्षया अनुल्वणत्वेनावगन्तव्यं, न तु स्वाभाविकवातजा इत्यर्थः, स्वाभाविकवाते—"वाताद्वक्रगता नाड़ी" इत्युक्तेः; ("सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत्" इति मेदिनी)। नाड़ी सौम्या अकठिना, मृदुस्पर्शा इत्यर्थः, सूक्ष्मा कृशा, स्थिरा विश्रान्तगमना, चिरादेवोपलभ्यमानस्पन्दा इत्यर्थः, मन्दा अप्रखरगमना, उपलभ्यमानस्पन्दत्वेऽपि अनुद्भटस्पन्देत्यर्थः भवतीति शेषः। तीव्रमारुते प्रबलवाते ज्वरे, स्थूला अकृशा, दोषपूर्णेत्यर्थः, कठिना स्थूलरज्ज्वादिवत् कठिनस्पर्शा, शीघ्रा द्रुतगामिनी सती, स्पन्दते अविलम्बेन स्फुरतीत्यर्थः। शङ्करसेनस्तु—"सहजवातजेति चयकालमपेक्ष्य स्थूला चेत्यादि प्रकोपकालेऽपि" इत्याह। अत्र चयप्रकोपयोः ग्रीष्मवर्षात्मकमृतुद्वयंरूपमर्थोऽवगन्तव्यः; ग्रीष्मे वातस्य सञ्चयः, वर्षासु च प्रकोपः चरकादिसम्मतत्वात्; तेन वातसञ्चयात्मके ग्रीष्मे यदि निदानसेवनसमकालप्रकुपितवातेन ज्वरो भवति तदेत्यर्थः। सौम्येत्यादिरूपगतिमती, वातप्रकोपकस्वभाववर्षासु यदि तादृशज्वरो जायते, तदा स्थूलेत्यादि-लक्षणविशिष्टा नाड़ी भवति, इत्यर्थः द्रष्टव्यः, न तु अन्यस्मिन् काले वातसञ्चयहेतुना सञ्चीयमानवातो ज्वरमुत्पादयति, सञ्चीयमानदोषेण रोगोत्पत्त्यदर्शनात्, "सर्वेषामेव रोगाणां निदानं कुपिता मलाः" इत्यनेन प्रकुपितस्यैव तस्य रोगोत्पादकत्वाच्च। "सञ्चयेऽपहृता

पित्तज्वरे नाड़ीगतिः।

**भृता च सरला दीर्घा शीघ्रा पित्तज्वरे भवेत्।**
**शीघ्रमाहननं नाड्याः काठिन्याच्च चला तथा।**
**मलाजीर्णेन नितरां स्पन्दनञ्च प्रकीर्त्तितम् ॥८३॥**

---

दोषा लभन्ते नोत्तरां गतिम्" इत्यनेन सञ्चीयमानावस्थायां दोषनिर्हरणस्यैव विहितत्वाच्चेति। एवमुत्तरत्र पित्तादिज्वरेऽपि चयप्रकोपयोरर्थः समाधानीयः ॥ ८२ ॥

सञ्चीयमानावस्थायां प्रकोपावस्थायाञ्च पित्तज्वरे नाड्या गतिविशेषमाह, भृतेति।—पित्तज्वरे पित्तजन्यज्वरे, नाड़ी भृता परिपूर्णा, दोषैरिति यावत्, सरला परितो ग्रन्थिजाड्यादिरहिता, दीर्घा तर्जनीमध्यमाऽनामिकाङ्गुलित्रयस्थानव्यापिनी, तथा शीघ्रा शीघ्रगामिनी, वेगवतीत्यर्थः, भवेत्, एवं काठिन्यात् कठिनस्पर्शत्वात् नाड्याः शीघ्रमाहननं द्रुतं द्रुतम् आहननं,:नाड़ीं भित्त्वा वहिरागन्तुमूर्द्ध्वं स्फुरणमिव स्फुरणमित्यर्थः, तथा चला चञ्चला, भवेत् इति पूर्व्वेणान्वयः ; शङ्करसेनस्तु भृतेत्यादि-शीघ्रान्तगतिविशेषः पित्तसञ्चयदशायां तथा शीघ्रमाहननादिगतिविशेषः प्रकोपे इत्याह, यदुक्तं—"शीघ्रा वेगवतीति पित्तसञ्चयदशायां, प्रकोपे तु नाड़ीं भित्त्वेव वहिरूर्द्ध्वं स्फुरतीव" इति। अत्र सञ्चयप्रकोपयोः वर्षाशरदात्मकऋतुद्वयरूपमर्थोऽवगन्तव्यः, वर्षासु पित्तस्य सञ्चयः, शरदि च प्रकोपः भवति इति चरकादिदर्शनात्, तेन वर्षासु यदि पित्तज्वरो भवति, तदा भृता च इत्यादिगतिका नाड़ी भवति, शरदि यदि भवति, तदा शीघ्रमाहननमित्यादिगतिका भवति, इत्येव व्याख्या कार्य्या, न तु अन्यस्मिन् काले पित्तसञ्चयहेतुना सञ्चीयमानं पित्तं ज्वरमुत्पादयति, सञ्चीयमानदोषेण रोगोत्पत्त्यदर्शनात्, "सर्व्वेषामेव रोगाणां निदानं कुपिता मलाः" इत्यनेन कुपितस्यैव तस्य रोगोत्पादकत्वाच्च। "सञ्चयेऽपहृता दोषा लभन्ते नोत्तरां गतिम्" इत्यनेन सञ्चीयमानावस्थायां दोषनिर्हरणस्यैव विहितत्वाच्च।

श्लेष्मला नाड़ी।

**नाड़ी तन्तुसमा मन्दा शीतला श्लेष्मकोपतः ॥८४॥**

वातपित्तगतनाड़ीज्ञानम्।

**चञ्चला तरला स्थूला कठिना वातपित्तजा ॥८५॥**

---

"शीघ्रमाहननं नाड्याः" इत्यत्र "शीघ्रमावहति नाड़ी" इति "काठिन्याच्च चला तथा" इत्यत्र "काठिन्याच्चलते तथा" इति पाठान्तरद्वयम्। मलाजीर्णेन तत्रैव पित्तज्वरे मलस्य दोषस्य, पित्तस्येत्यर्थः, "एकः प्रकुपितो दोषो सर्वानेव प्रकोपयेत्" इत्युक्त्या कुपितपित्त-प्रकुपितवातादीनां मलानामित्यर्थो वा अजीर्णसम्बन्धेन सामतयेत्यर्थः, नितराम् अतिशयेन, मुहुरिति यावत्, "मलाजीर्णे नातितराम्" "मलाजीर्णे च नितराम्" "दोषाजीर्णेन नितराम्" इति च पाठान्तरत्रयम्। स्पन्दनं स्फुरणं, स्वाभाविकचापल्याति-शय्येन मुहुरूर्द्ध्वस्फुरणमिति यावत्, परिकीर्त्तितम् ॥ ८३ ॥

कफज्वरे नाड्याः गतिमाह, नाड़ीति।—श्लेष्मकोपतः ज्वरप्रकरणात् श्लेष्मप्रकोपजे ज्वरे इत्यर्थः, नाड़ी तन्तुसमा अतिसूक्ष्मा, मन्दा राज-हंसमयूरादिवत्मन्थरगमना, तथा शीतला शीतस्पर्शा, अत्र शीतलेति सामान्येनोक्तावपि ज्वरसम्बन्धात् तप्तोदकसिक्तरज्जुवत् नाड्या ईषदुष्णता-ऽवगन्तव्या। अत्र "कफचयप्रकोपरूपञ्च उक्तम्" इति शङ्करसेनोक्त्या एवमवगम्यते यत्, कफस्य सञ्चयावस्थायां प्रकोपावस्थायां वा यदैव ज्वरो भवतु, उभयत्रैव नाड्याः गतिः अविशेषा एव वर्त्तते इति ॥ ८४ ॥

द्वन्द्वजेषु नाड्याः गतिविशेषानाह, चञ्चलेति।—वातपित्तजा वातपित्तप्रकोपजनितज्वरावस्थिकीत्यर्थः, नाड़ी चञ्चला कपिगति-वदस्थिरगमना, कुलिङ्गभेकादिगमनवद्गमना चेति पित्तकार्य्यञ्चेदम्। तरला कदाचित् दोलायमानेव, तथा स्थूला कठिना च भवतीति शेषः; तरलत्वादिकन्तु वातकार्य्यत्वेनावधातव्यं, वातपित्तयोरुभयो-रेव धर्म्मस्य सत्त्वात् ॥ ८५ ॥

वातश्लेष्मकालिको नाड़ी।

ईषच्च दृश्यते तृष्णा मन्दा स्यात् श्लेष्मवातजा।
निरन्तरं खरं रूक्षं मन्दश्लेष्माऽतिवातला ॥ ८६ ॥
रूक्षवातभवे तस्य नाड़ी स्यात् पिण्डसन्निभा॥८७॥

पित्तश्लेष्मजा नाड़ी।

सूक्ष्मा शीता स्थिरा नाड़ी पित्तश्लेष्मसमुद्भवा ॥८८

---

ईषदिति।—श्लेष्मवातजा समकुपितवातश्लेष्मजज्वरकालिकी नाड़ीत्यर्थः, ईषदुष्णा अल्पोष्णस्पर्शा, वातधर्मोऽयं शीतगुणस्यापि वायोरुष्णता त्वरितनाड़ीसम्बन्धादिति। मन्दा च मन्दगमना, हंसगमनवद्गमना चेत्यर्थः, स्यात्, कफधर्मोऽयम्। क्षीणकफवाताधिकद्वन्द्वजे नाड्या गतिविशेषमाह, निरन्तरमिति।—मन्दश्लेष्मा क्षीणकफा, एतच्च वाताधिक्यमपेक्ष्य, अतिवातला वातप्रबला, नाड़ीति शेषः, निरन्तरं धारावाहिरूपं, मध्ये गत्यन्तररहितमिति यावत्, खरं तीक्ष्णं, मान्द्यव्यतिरेकेण प्रबलवेगवाहि इति यावत्, रूक्षमस्निग्धभावं, कर्कशस्पर्शरूपञ्च इति यावत्, तद् यथा तथा, वहतीति शेषः ॥ ८६ ॥

रूक्षक्रियाजन्यप्रकुपितवातज्वरे नाड्याः गतिविशेषमाह, रूक्षेति।—रूक्षवातभवे रूक्षसेवनजनितवातज्वरे इत्यर्थः, श्लेष्मणा संसृष्टवातज्वरे इति यावत्, तस्य ज्वरितस्य नाड़ी, पिण्डसन्निभा मांस्यादिना मध्ये वर्त्तुलीकृतप्राया, चक्राकारेत्यर्थः, सा च वक्रताल्पत्वयोरातिशय्येन उन्नेया। "पित्तसन्निभा" इति पाठे—प्रागुक्तपित्तधर्मविशिष्टेत्यर्थः ॥८७॥

पित्तश्लेष्मज्वरे गतिविशेषमाह, सूक्ष्मेति।—पित्तश्लेष्मसमुद्भवा समप्रकुपितपित्तश्लेष्मजज्वरकालिकीत्यर्थः, नाड़ी सूक्ष्मा कृशा, स्थूलताविपर्य्ययेण कार्श्यस्यापि कफकार्य्यत्वात्, तत्र गतेर्वक्रत्वावक्रत्वाभ्यां वातिकसौक्ष्म्यात् श्लैष्मिकसौक्ष्म्यस्य भेद उन्नेयः। शीता शीतला, अत्र अनुक्तोऽपि पित्तसम्बन्धात् कदाचिदल्पशीता, कदाचित् कदुष्णा चेति केवलकफात्

रक्तपूर्ण-मलवती नाड़ी।

मध्ये करे वहेन्नाड़ी यदि सन्तापिता ध्रुवम्।
तदा नूनं मनुष्याणां रुधिरापूरिता मलाः ॥८६॥

कामादौ नाड़ीज्ञानम्।

कामात् क्रोधात् वेगरोधात् चीणा चिन्ताभव-
प्लुतात् ॥ ६० ॥

---

भेदः वृद्धवैद्योपदिष्टो द्रष्टव्यः। तथा स्थिरा अनुल्वणा, विश्रान्तवेगा इत्यर्थः। अत्रापि पित्तसम्बन्धात् पूर्ववत् कदाचिदस्थिरा इति केवल-कफात् भेदोऽवगन्तव्यः। "नाड़ी" इत्यत्र "मन्दा" इति पाठान्तरे—श्लथस्पन्दना इत्यर्थः, एवञ्च पित्तसम्बन्धात् कदाचित् चपला चेति शुद्ध-श्लेष्मणो भेदो द्रष्टव्यः ॥ ८८ ॥

प्रसङ्गात् मलेषु रुधिरपूरितेषु नाड्या गतिज्ञानमाह, मध्य इति।—नाड़ी यदि सन्तापिता पित्तोद्रेकेण उष्णस्पर्शा सती, मध्ये करे परीक्षार्थं निक्षिप्तमध्यमाङ्गुलिनिवेशस्थाने इत्यर्थः, "कफोणिस्थ-नाड्याम्" इति केचित्, ध्रुवम् अजस्रं, निरन्तरमित्यर्थः, विश्रान्त-रहितं यथा तथेति यावत्, "स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्र-तर्कयोः" इति हैमः। वहेत्, तदा नूनं निश्चितं, मनुष्याणां मला वातादिदोषाः, रुधिरेण दुष्टेन रक्तेन, आपूरिताः सम्यक् पूरिताः, संसृष्टा इति यावत्, ज्ञेयाः। अत्र प्रकरणवशात् सर्वमेतत् ज्वरावस्थायां भवदपि ज्वरादन्यत्रापि बोद्धव्यम्; "त्रिदोषमात्रे उल्वणानुल्वणदोष-भेदात् सर्वमिदम्" इति केचित् ॥ ८६ ॥

आगन्तुकारणात् नाड्या गतिविशेषमाह, कामादिति।—कामात्, क्रोधात्, वेगरोधात् मूत्रपुरीषादीनामुपस्थितवेगनिग्रहात्, तथा चिन्ता-भवं चिन्ताजनितं प्लुतम् आप्लुतिः चिन्ताकुपितदोषेणाच्छन्नीभावः इत्यर्थः, तस्मात्, चीणा अतिसूक्ष्मा नाड़ी भवति इति शेषः। "कामात्

भूतज्वरे सेक इवातिवेगा
धावन्ति नाड्यो हि यथाऽब्धिगामाः ॥ ९१ ॥

विषमज्वरे नाड़ीगतिः।

ऐकाहिकेन क्वचन प्रदूरे
क्षणान्तगामा विषमज्वरेण।

---

क्रोधात् वेगवती क्षीणा चिन्ताभयप्लुता" इति पाठान्तरं साधु; तत्र कामात्, क्रोधात्, वेगवती वेगवाहिनी नाड़ी भवेदिति शेषः, चिन्ताभयाभ्यां प्लुता चिन्ताभयप्लुता चिन्ताभयविशिष्टा नाड़ी क्षीणा इत्यर्थः। अवस्था चेयं ज्वरव्यतिरेकेणैव भवतीति ज्ञातव्यम्। केचित्तु ज्वरावस्थायामेवेति वदन्ति ॥ ९० ॥

"ज्वरोऽष्टधा पृथग्द्वन्द्वसन्निपातागमः स्मृतः" इति निदानवचनात् ज्वराः पृथग्द्वन्द्वादिभेदात् अष्टावेव, तत्र दोषजेषु नाड़ीनां गतिविशेषमुक्त्वा इदानीमागन्तुज्वरेषु भौतिकज्वरस्यैव प्राधान्यात् तत्र नाड्या गतिमाह, भूतेति।—भूतज्वरे भूताभिषङ्गजनितज्वरे, "भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम्" इत्यादिलक्षणान्विते आगन्तुज्वरभेदे इति यावत्, सेके जलसेके, वर्षासु पयःपूरागमे सति इत्यर्थः, अब्धिगामाः समुद्रगामिन्यः, नद्य इति शेषः, ता इव, ता यथा जलप्लुताः स्रोतस्वत्यश्च तद्वदिति यावत्, नाड्यः अतिवेगाः प्रखरवेगगामिन्यः सत्यः; अत्र उष्णताया अनुक्तत्वेऽपि सर्वज्वरसाधारणत्वात् तापस्तु स्यादेव, तेन तप्तजलसिक्तरज्जुवत् इत्यर्थः, धावन्ति ॥ ९१ ॥

विषमज्वरे नाड़ीज्ञानमाह, ऐकाहिकेन इति।—ऐकाहिकेन तदाख्येन विषमज्वरेण, क्वचन कुत्रचित्, कदाचिदिति यावत्, प्रदूरे अङ्गुष्ठमूलात् किञ्चिद्दूरे, नाड्यः गच्छन्ति इति शेषः, किन्तु क्षणान्तात् क्षणकालानन्तरं गामः गमनं, पुनः स्वस्थाने आगमनं यासां ताः, क्षणान्तगामाः, पुनः कदाऽपि अङ्गुष्ठमूलं सन्त्यज्य कियद्दूरं गत्वा कियत्-

द्वितीयके वाऽथ तृतीयतुर्य्ये
गच्छन्ति तप्ता भ्रमिवत् क्रमेण ॥ ९२ ॥
क्रोधजे सङ्गलग्नाङ्गा ससङ्गा कामजज्वरे ।
उष्णा वेगधरा नाड़ी ज्वरकोपे प्रजायते ॥९३॥

कालानन्तरमेव स्वस्थानं गच्छन्ति । द्वितीयके द्व्याह्निके ज्वरे, अथवा तृतीयतुर्य्ये तृतीयके चातुर्थके वा ज्वरे, नाड्यः तप्तास्तप्तस्पर्शाः सत्यः, भ्रमिवत् जलावर्त्त इव, क्रमेण शनैः शनैः, गच्छन्ति, कियद्दूरे गच्छन्ति, समन्ततो जोघूर्य्यमानः जलावर्त्तो यथा भ्रमणवेगेन किञ्चिद्दूरं गत्वा पुनरेव मध्यदेशे आगच्छति, एवं पुनःपुनः करोति च, नाड्यः अपि तथा वेगवशात् अङ्गुष्ठमूलात् कियद्दूरं गत्वा पुनः अङ्गुष्ठमूले समायाति, एवं पुनःपुनरावर्त्तते च इत्यर्थः । न चैव स्वस्थानच्यवनेनासाध्यत्वमाशङ्कनीयम्, असाध्यलक्षणे स्वस्थानत्यागे हि उष्णताविरहात्, अत्र तु उष्णताबोधनार्थं "तप्ताः" इति विशेषणं प्रयुक्तम् ॥ ९२ ॥

क्रोधजकामजयोर्लक्षणमाह, क्रोधज इति ।—क्रोधजे ज्वरे, सङ्गलग्नाङ्गा सङ्गात् नाड्यन्तरसंसर्गात् लग्नं संसक्तं सङ्गलग्नं नाड्यन्तरस्पृष्टमिव अङ्गं यस्याः सा, नाड़ीति प्रकरणात् जायते इति शेषः । कामजज्वरे नाड़ी ससङ्गा अन्यनाड्या सह आलिङ्गिता इव इत्यर्थः, "समाङ्गा" इति पाठे—समं साधु, अनुल्वणमित्यर्थः, अवैषम्येण वातादिक्रमवत् इति यावत्, अङ्गं यस्याः सा समाङ्गा किञ्चिद्विकृतत्वेऽपि अनुल्वणाविषमगतिकेत्यर्थः, यद्वा—समं नाड्यन्तरेण सह एकीभूतम् अङ्गं यस्याः सा समाङ्गा अन्यनाड्या सह आलिङ्गितेवेत्यर्थः । अत्र शङ्करसेनीया व्याख्या यथा—"समाङ्गेति नाड्यन्तरसम्बन्धेनैव वातादिक्रमः इति । न तु उल्वणा" इति । "समङ्गा" इति च पाठान्तरम् । "तथा स्यात् कामजे ज्वरे" इति पाठान्तरन्तु सुगमम् । अत्र तु एवं ज्ञातव्यं यत्, कामजक्रोधजे नाड्यन्तरसम्बन्धात् नाड्यां

उद्वेगक्रोधकालेषु भयचिन्ताश्रमेषु च ।
भवेत् क्षीणगतिर्नाड़ी ज्ञातव्या वैद्यसत्तमैः ॥९४॥

---

जाड्यानुभवो जायते, अजीर्णरोगे तु जाड्यसत्त्वेऽपि न नाड्यन्तरसम्बन्धः, असम्भवत्वात् इति भेदः। ज्वरकोपे पूर्वोक्तज्वरद्वयस्य प्रवृद्धावस्थायां नाड़ी उष्णा उष्णस्पर्शा, वेगधरा वेगः शीघ्रगमनभेदः तं धरतीति वेगधरा वेगवती च द्रुतगमनेत्यर्थः, प्रजायते; उक्तञ्च—"कामात् क्रोधात् वेगवती" इति। एतेनैवमुक्तं यत् कामजक्रोधजे अप्रवृद्धे ज्वरे सङ्-लग्नाङ्गादिरूपा गतिः भवति, न तु उष्णादिरूपा, प्रवृद्धे तु तस्मिन् सर्वज्वरसाधारणी उष्णतादिरूपा गतिर्जायते इति। किंवा—"कामज-ज्वरे" इत्यत्र ज्वरशब्दो व्याधिसामान्यवाचकः, "ज्वरो रोगो यक्ष्मा व्याधिरातङ्कः" इति चरके व्याधिपर्य्यायदर्शनात्, तेन क्रोधजकामज-व्याधौ इत्यर्थः ॥ ९३ ॥

उद्वेगादिना नाड्याः गतिविशेषमाह, उद्वेगेति।—उद्वेगः काम-जनितः वैराग्यजनितो वा भावविशेषः, क्रोधः कोपः, तयोः कालाः तेषु, ( बहुवचनमविवक्षितम्। ) भयं व्याघ्रादिदर्शनजं, चिन्ता दुःखादे-र्भावना, श्रमः श्रमणं तेषु, "उद्वेगक्रोधकामेषु भयचिन्ताज्वरेषु च" तथा "भयचिन्ताश्रमेषु च" इति पाठद्वयं दृश्यते। वैद्यसत्तमैः भिषगुत्तमैः, नाड़ी क्षीणा गतिर्यस्याः सा तादृशी, ज्ञातव्या बोध्या भवेत्। यद्वा—वैद्य-सत्तमैः ज्ञातव्या परीक्षणीया, नाड़ी क्षीणगतिर्भवेत् इत्यन्वयः। क्वचित् पुस्तके "भावक्षीणगतिः" इति पाठः दृश्यते। तत्र भावः उद्वेगादिजा अभिलाषाद्यवस्था, तेन क्षीणा गतिर्यस्याः। "उद्वेगक्रोधकामेषु भयचिन्ताश्रमेषु च। भावक्षीणगतेर्नाड़ी" इति गोविन्दरामधृतपाठे—उद्वेगः श्रमशीघ्रगमनादिभेदेन उद्वेजनं, क्रोधः ख्यातः, कामो रतिः, भयं राक्षसादिदर्शनात्, चिन्ता दुःखादेर्भावना, श्रमः श्रमणं तदा-दिषु" इति तत्कृता व्याख्या। भावेन क्षीणा गतिस्तस्याः भावक्षीण गतेः भावक्षीणगतिं परिज्ञायेत्यर्थः, ( ल्यब्लोपे पञ्चमी ) वैद्यसत्तमैः

ज्वरे रमणादौ नाड़ीज्ञानम्।

**ज्वरे च रमणे नाड़ी क्षीणाङ्गी मन्दगामिनी।**
**ज्वरे कामार्त्तिरूपेण भवन्ति विकलाः शिराः॥९५॥**

ज्वरकाले दधिभोजनजा नाड़ी।

**उष्णत्वं विषमा वेगा ज्वरिणां दधिभोजनात्॥९६॥**

---

नाड़ी ज्ञातव्या, एतादृशी नाड़ी उद्वेगादिहेतोः सञ्जाता निश्चेतव्या इति अवशिष्टांशव्याख्या। "भावक्षीणागतिः" इति पाठे—गतिः गमनात्, (हेतौ पञ्चमी) गमनेन हेतुनेत्यर्थः, उद्वेगः, तथा क्रोधकाला-दिषु (सापेक्षत्वेऽपि गमकत्वात् समासः) नाड़ी भावेन अभिलाषा-द्यवस्थाभेदेन क्षीणा कृशा, ज्ञातव्या, उक्तञ्च—"क्षीणा चिन्ताभयप्लुता" इति। ज्वरादन्यत्रैव केचिदिदमामनन्ति॥ ९४॥

ज्वरितस्य मिथ्याऽऽहारविहारादिषु नाड्या गतिविशेषमाह, ज्वरे चेति।—ज्वरे सत्यपि रमणे कृते, न तु ज्वरे च रमणे च इति पृथगन्वयः, ज्वरविशेषे नाड्या गतिविशेषेण प्रागुक्तेन विरोधात्। नाड़ी क्षीणाङ्गी कृशा, तथा मन्दं मन्दं गच्छति वहतीति तादृशी मन्दगामिनी अति-मृदुगतिका भवेदिति शेषः। ज्वरे रिरंसायां गतिमाह, ज्वरे इति।—ज्वरे कामार्त्तिरूपेण ज्वरकालीनस्त्रीसंसर्गेच्छया शिरा नाड्यः, विकला इतस्ततश्चपलाः, अभिलषितद्रव्यमप्राप्य तत्र कृतप्रयत्ना नरा इवेति भावः; भवन्ति॥ ९५॥

उष्णत्वमिति।—ज्वरिणां दधिभोजनात् ज्वरकाले दधिसेवनात्, "ज्वरिणां दधिभोजिनाम्" इति पाठान्तरम्। उष्णत्वं ज्वरस्वभावजो-ष्णादपि अधिकः सन्ताप इत्यर्थः, तथा विषमा वेगाः ज्वरे सामान्यतः यादृशा वेगा भवितुमर्हन्ति, तेभ्योऽपि उत्कटवेगा इत्यर्थः, यद्वा—विषमा वेगा वेगवैषम्यं, कदाचित् प्रबलतरवेगाः, कदाचित् मन्दतरवेगाः इत्यर्थः, नाड्या भवन्तीति शेषः॥ ९६॥

काञ्जिकया ज्वराक्रान्ते जायते मन्थरा गतिः।
अम्लाशित्वादसुस्थत्वे जायन्ते तापिताः शिराः॥९७॥

ज्वरत्यागात् व्यायामादौ नाड़ीगतिः।

व्यायामे भ्रमणे चैव चिन्तायां धनशोकतः।
नानाप्रकारगमनं शिरा गच्छति विज्वरे॥९८॥

---

काञ्जिकयेति।—काञ्जिकया काञ्जिकसेवनेन, ज्वराक्रान्ते, अन्यरोगेऽपि द्रव्यस्वभावात्, यद्वा—ज्वराक्रान्ते व्याधिपीड़िते, ज्वरस्य सामान्येन व्याधिपर्य्यायकत्वात्; गतिः नाड्या इति शेषः, मन्थरा मन्दा, जायते। अम्लाशित्वात् अत्यम्लभोजनेन इत्यर्थः, असुस्थत्वे ज्वरे रोगान्तरे वा सति इति भावः, शिरा नाड्यः, तापिताः उष्णाः, जायन्ते भवन्ति, परिसरस्थलस्य वह्निरूपत्वात् अम्लस्य पित्तवर्द्धकत्वाच्च इति भावः॥ ९७॥

व्यायाम इति।—विज्वरे ज्वरमुक्तिमात्रे, व्यायामः मल्लयुद्धादिः तस्मिन्, भ्रमणे चंक्रमणे, चिन्तायाम् अध्ययनादिना, धनशोकतः धननाशाच्च, अत्र बन्धुनाशादिरूपमन्यदपि शोककारणमूहनीयम्; ज्वरमोचानन्तरम् आ बललाभात् यद्येते सम्भवन्ति, तदा शिरा नाड़ी, नानाप्रकारगमनं क्षणं क्षणं विभिन्नरूपतया गमनं, कदाचिन्मन्दं कदाचिच्चपलं, कदाचिदव्यक्तं, कदाचित् सुव्यक्तमित्यादिरूपं यथा तथा इत्यर्थः, "गमनम्" इत्यत्र "गमना" इति पाठान्तरम्। गच्छति धावति। "व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणं तथा। ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत्॥" इति सुश्रुतोक्त्या ज्वरमोचानन्तरमेतेषां निषेधात्, तथा सुस्थशरीरेऽपि व्यायामादिना नाड़ीनां दुर्बोधत्वस्य प्रागुक्तत्वाच्च। व्यायामादिषु विज्वरे इत्यत्र अपिशब्दो लुप्तो द्रष्टव्यः, तेन विज्वरेऽपि ज्वरशून्यावस्थायामपि, किं पुनर्ज्वरावस्थाया-

अजीर्णे नाड़ीज्ञानम्।

**अजीर्णे तु भवेन्नाड़ी कठिना परितो जड़ा।**
**प्रसन्ना तु द्रुता शुद्धा त्वरिता च प्रवर्त्तते ॥९९॥**
**पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं वहेच्छिरा।**
**असृक्पूर्णा भवेत् कोष्णा गुर्वी सामा गरीयसी१००**

---

मित्यर्थः, शिरा नानाप्रकारगमनं गच्छति इत्यर्थो वा। इति ज्वरज्ञानम् ॥ ९८ ॥

इदानीं प्राप्तावसरतया रोगान्तरनिरूपणे कर्त्तव्ये, प्रकटरोगाणां ग्रन्थान्तरे निःसन्देहनिरूपणात् तेषां वातादिजन्यत्वविशेषस्य प्रागुक्तलक्षणैरेवाधिगमनाच्च निगूढ़लिङ्गरोगनिरूपणमेवारभमाणो निखिलगदमूलत्वात् अजीर्णनिरूपणार्थं गतिविशेषमाह, अजीर्णे इति।—अजीर्णे इत्यविशेषोक्त्या अलामपक्वसामान्ये इति बोद्धव्यम्; नाड़ी कठिना अकोमला, परितः उभयपार्श्वतः, जड़ा अपृथग्भूतप्राया, परस्परं संलग्नप्राया इत्यर्थः, तथा वक्ष्यमाणजीर्णलक्षणोक्त-त्वरितत्वविपर्य्ययेण मन्दमन्दगमना च सती, प्रवर्त्तते इत्युत्तरेणान्वयः। "अजीर्णे तु" इत्यत्र "अजीर्णेन" इति पाठान्तरम्। प्रसन्ना तु अजीर्णाभाववती नाड़ी तु, द्रुता अकठिना जलप्लुतेव कोमला इत्यर्थः, शुद्धा जाड्यरहिता, त्वरिता शीघ्रस्पन्दा च सती, प्रवर्त्तते वहतीत्यर्थः ॥ ९९ ॥

आमपक्वाजीर्णयोः नाड्या गतिसामान्यमुक्त्वा पक्वाजीर्णे गतिविशेषमाह, पक्वाजीर्णे इति।—पक्वाजीर्णे अजीर्णरोगे मलस्य पक्वावस्थायां, मले पाकोन्मुखे वा, "एतान्येव तु लिङ्गानि विपरीतानि यस्य वै। लाघवञ्च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥" इत्यतीसारोक्तपक्वमललक्षणवन्मले, अजीर्णे इत्यर्थः, यद्वा—विनाशाभिमुखेऽजीर्णे, ("पक्वं परिणतेऽपि स्यात् विनाशाभिमुखे त्रिषु" इति मेदिनी) शिरा नाड़ी, पुष्टिहीना गुरुत्वविहीना सती, मन्दं मन्दं वहेत्

सुखितमन्दानलादौ नाड़ीगतिः।

**सुखितस्य स्थिरा ज्ञेया चपला क्षुधितस्य च।**
**मन्दाग्नौ क्षीणधातौ च नाड़ी मन्दतरा भवेत्।**
**मन्देऽग्नौ क्षीणतां याति नाड़ी हंसाकृतिस्तथा॥१०१॥**

---

गच्छेदित्यर्थः। असृक्पूर्णा तत्राजीर्णे नाड़ी रक्तपूर्णा चेत्, कोष्णा ईषदुष्णा, तथा गुर्वी स्थूलेत्यर्थः, उक्तञ्च—"गुर्वी कोष्णा च रुधिरपूर्णा नाड़ी प्रजायते" इति। एतच्च कोष्णत्वादिकं मध्ये करे एव अनुभवनीयम्; "मध्ये करे वहेन्नाड़ी यदि सन्तापिता ध्रुवम्" इत्यादिना प्रागुक्तत्वात्। सामा सा असृक्पूर्णा नाड़ी सामदोषान्विता चेत्, सामलक्षणोक्तं यथा—"ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्। दुष्टमामाशयगतं रससामं प्रचक्षते॥ आमेन तेन संयुक्ता दोषा दूष्याश्च धातवः। सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः॥" इति। गरीयसी अत्यर्थं स्थूला, गुरुत्वात् आमस्य, तत्रायं विशेषः वृद्धसम्मतः ज्ञातव्यः यत्,—सा सामा नाड़ी कफसंसृष्टा चेत् अकठिना, वातसंसृष्टा चेत् कठिना, पित्तसंसृष्टा तु असृक्पूर्णलक्षणा एव, पित्तरक्तयोः सामान्यात् इति॥ १००॥

अजीर्णप्रसङ्गात् तृप्तक्षुधितयोर्नाड्या विशेषज्ञानमाह, सुखितस्येति।—सुखितस्य भोजनादिना तृप्तस्य, स्थिरा मन्दगमना, नाड़ीति शेषः, भुक्तमात्रे कफोद्रेकादिति भावः। किञ्च "सुखितस्तु स्थिरा ज्ञेया तथा बलवती मता" इति तन्त्रान्तरीयश्लोके बलवती इति पददर्शनात् अत्रापि स्थिरा तथा बलवती स्थूला इत्यर्थः मन्तव्यः, प्रोक्तश्लोके बलवती इत्यस्य स्थूलार्थकत्वात्, सा च स्थूलता भोजनानन्तरं तात्कालिकाजीर्णसम्बन्धादित्यवगन्तव्यम्। क्षुधितस्य चपला अस्थिरा, तदा पित्तोद्रेकादिति भावः, किञ्च, पित्तोल्बणतया कुलिङ्गलावकादिगमना च जायते इत्यवगन्तव्यम्। मन्दाग्नाविति।—मन्दाग्नौ अग्निमान्द्ये, क्षीणधातौ धातुक्षये च, "मन्दाग्नेः क्षीणधातोश्च" इति

आमाशयादिदुष्टा नाड़ी।

**आमाशये पुष्टिविवर्द्धनेन**
**भवन्ति नाड्यो भुजगाग्रवृत्ताः।**

---

पाठान्तरम्। नाड़ी मन्दतरा अतिमन्दगमना भवेत्। अत्र "क्षीणधातौ च मन्दाग्नौ नाड़ी क्षीणतमा भवेत्" तथा "मन्दाग्नौ शीततां याति नाड़ी हंसाकृतिस्तथा" इति ग्रन्थान्तरीयवचनदर्शनादनुक्ताऽपि क्षीणा शीतला हंसाकृतिगतिश्च तथा "लघ्वी वहति" इति वक्ष्यमाणश्लोके दीप्ताग्नौ लघुतादर्शनात्, तद्विपर्य्ययेण किञ्चिज्जड़ताऽपि बोद्धव्या। मन्दे इति।—अग्नौ मन्दे सति नाड़ी क्षीणतां कृशतां, "मन्दाग्नौ शीतताम्" इति पाठान्तरम्। याति, तथा हंसाकृतिः हंसगमनेत्यर्थः, भवेदिति शेषः॥ १०१॥

अजीर्णप्रसङ्गात् तद्विशेषे आमाशयदुष्ट्यादौ नाड़ीज्ञानमाह, आमाशय इति।—आमाशये "नाभिस्तनान्तरं जन्तोरामाशयं विदुर्बुधाः" इत्युक्तस्वरूपाशयविशेषे इत्यर्थः, दुष्टे सति इति भावः, तद्दूषणस्य अजीर्णकार्य्यत्वात्; "आमाश्रये" इति पाठे—आमाश्रये आमस्थाने आमाशये इत्येवार्थः, यद्वा— आमाश्रये इति दोषस्य विशेषणं, तेन दोषे आमसंस्पृष्टे सतीत्यर्थः, पुष्टिविवर्द्धनेन नाड़ीनां सहसा स्थौल्याभिवृद्ध्या, आमाशयस्य श्लेष्मस्थानत्वात् इति भावः; यद्वा—आमाशये (इत्याश्लेषे सप्तमी) आमाशयस्य अंशविशेषे इत्यर्थः, पुष्टिविवर्द्धनेन स्वमात्रापेक्षया आमाशयस्य अंशविशेषे सहसा प्रवृद्धे सतीत्यर्थः, किंवा पुष्टिविवर्द्धनेन पुष्टिवर्द्धकेन द्रव्येण, अत्यर्थभुक्तेनेति भावः, आमाशये दुष्टे सति, गुरुपाकिद्रव्याणामत्यर्थं भोजनस्य आमाशयदूषकत्वात्। नाड्यः भुजगाग्रवृत्ताः भुजगस्य सर्पस्य, अग्रम् अग्रभागः इव, वृत्तं वर्त्तनम्, अवस्थानमित्यर्थः, यासां ताः तादृश्यः, भवन्ति, भुजगो यथा पश्चाद्भागापेक्षया स्थूलं शिरोदेशं किञ्चिद्वक्रं कृत्वा स्थित्वा च मन्दं मन्दमान्दोलयति, तथा नाड्यः अपि अङ्गुल्यग्रभागे किञ्चित्

आहारमान्द्यात् उपवासतो वा-
ऽतथैव नाड्यो भुजगातिवृत्ताः ॥ १०२ ॥

दीप्ताग्नौ नाड़ीगतिः।

लघ्वी वहति दीप्ताग्नेस्तथा वेगवती स्मृता ॥१०३॥

---

वक्रा भूत्वा स्थित्वा स्थित्वा वहन्तीत्यर्थः। यद्वा—भुजगाग्र इव वृत्तं वर्त्तुलाकारत्वं यासां तादृश्यः, सर्पफणाकारवत् वर्त्तुलाः स्थूला इत्याशयः। "भुजगकवृत्ताः" "भुजगप्रमाणाः" "भुजगातिवृद्धाः" इति पाठान्तरत्रयम्। आहारमान्द्यात् अजीर्णजनितभोजनाल्पत्वात्, उपवासतः अभोजनाद् वा नाड्यः अतथैव अन्यथैव, कार्श्यविवर्द्धनेनेत्यर्थः; शङ्करस्तु—"तेन क्रमेण पुष्टाः क्रमेण क्षीणाश्चेत्यर्थः" इति व्याख्यातवान्। भुजगवत् अतिवृत्ताः वर्त्तुलाः, अत्र वर्त्तुलत्वेनैव भुजगसाम्यं, न तु स्थौल्येन इत्यवगन्तव्यं, तेन गतिस्तु मन्दैव, भवन्तीति शेषः। यद्वा—आहारमान्द्यात् बहुभोजिनोऽल्पाशनेन च नाड्यः भुजगाग्रवृत्ता भवन्ति इति पूर्वेणान्वयः, ईषद्धि कराग्र एव सर्पफणाकारा किञ्चिद्वक्रा भूत्वा स्थित्वा स्थित्वा वहन्तीत्यर्थः। उपवासतो वा, अत्र वाशब्दस्तुकारार्थकः, अग्निमान्द्येन भोजनाप्रवृत्तिजनितोपवासात्तु नाड्यः अतथैव भुजगातिवृत्ता इत्यन्वयः का[illegible] प्रकृतिस्थस्य उपवासे तु नाड़ी शीघ्रा क्षीणा च वक्रा च वाताधिक्यात् ॥ १०२ ॥

मन्दाग्निप्रसङ्गमुक्त्वा इदानीं प्रदीप्ताग्नेर्नाड़ीज्ञानमाह, लघ्वीति।—दीप्ताग्नेर्जनस्य नाड़ी लघ्वी न पुष्टा नापि क्षीणा, किन्तु स्वच्छा उच्छूना च सतीत्यर्थः, वहति, तथा वेगवती क्षुधावृद्धा धावमाना, "बलवती" इति पाठान्तरं, स्मृता कथिता। अत्र अनुक्ता अपि मन्दाग्निवैपरीत्येन अशीतलाः क्षीणाश्च नाड्यो भवन्तीति वृद्धोपदेशात् ज्ञातव्यम्।

### ग्रहण्यां नाड़ीगतिः।

**पादे च हंसगमना करे मण्डूकसंप्लवा।**
**तस्याग्नेर्मन्दता देहे त्वथवा ग्रहणीगदः ॥१०४॥**

---

क्वचित् पुस्तके इतः परं पञ्च श्लोकाः अधिका दृश्यन्ते। यथा—

"अतीसारे च मन्दा स्यात् ग्रीष्मकाले जलौकवत्।
वातातिसारे वक्रत्वं चञ्चला पित्तसम्भवे॥
राजहंसगतिर्यादृक् तादृङ् नाड्यः कफात्मते।
द्वन्द्वजातीसारे नाड़ीं मुहुर्मेकगतिं तथा॥
वातपित्तसमुद्भूतां प्रवदन्ति मनीषिणः।
भुजगादिगतिं स्थूलां राजहंसगतिं तथा॥
वातश्लेष्मसमुद्भूतां प्रवदन्ति महाधियः।
मण्डूकादिगतिं नाड़ीं मयूरादिगतिं तथा॥
पित्तश्लेष्मसमुद्भूतां प्रवदन्ति विशारदाः।
सन्निपाते विलुप्ता तु नाड़ी भवति निश्चितम्॥" इति ॥१०३॥

ग्रहणीगदे नाड्याः गतिविशेषमाह, पाद इति।—पादे चरणे, यस्य पादस्थिता नाड़ीत्यर्थः, हंसगमना हंसवद्गमनशीला "हंससदृशी" इति पाठान्तरम्। करे पाणौ, हस्तस्थिता नाड़ीत्यर्थः, मण्डूकसंप्लवा भेकवत् प्लुतगमना, भवतीति शेषः, तस्य देहे शरीरे, तु अग्नेर्मन्दता अग्निमान्द्यम्, देहे अग्नेः कायाग्नेः, जठरानलस्येत्यर्थः, मन्दता अल्पता इत्यर्थो वा, अथवा ग्रहणीगदः ग्रहणीरोगः, ज्ञेयः इति शेषः। मन्दाग्निग्रहण्योरन्योन्यापेक्षिकत्वात् अत्र विकल्पो ज्ञेयः। "अथवा" इत्यत्र "उदरे" "दुःखदः" इति पाठान्तरद्वयम्। अत्र त्वेवं बोद्धव्यं—वातजायां ग्रहण्यां नाड्या वक्रगमनं, पित्तजायां चञ्चलता, कफजायां स्थिरत्वमिति प्राञ्चः। तदुक्तम्—

"वाताद् वक्रगता नाड़ी चपला पित्तसम्भवे।
कफे स्थिरामिमां विद्यान्नाड़िकां ग्रहणीगदे॥" इति ॥१०४॥

ग्रहण्यतिसारविलम्बिकादौ नाड़ीगतिः।

भेदेन शान्ता ग्रहणीगदेन
निर्वीर्य्यरूपा त्वतिसारभेदे।
विलम्बिकायां प्लवगा कदाचित्
आमातिसारे पृथुला जड़ा च॥ १०५॥

वेगरोध-विसूच्योर्नाड़ी।

निरोधे मूत्रशकृतोर्विड्ग्रहे त्वितराश्रिताः।

---

भेदेनेति।—ग्रहणीगदेन, ग्रहणीशब्देनात्र संग्रहग्रहणी एव वृद्धसम्मता, अत संग्रहग्रहणीजनितेनेत्यर्थः, भेदेन महता रेचनेन, नाड़ी शान्ता अनुल्वणा, वेगराहित्येन ईषदेवोपलभ्यमानस्पन्देत्यर्थः; अतिसारभेदे अतिसारिणः अतिरेचने, नाड़ी निर्वीर्य्यरूपा शिथिलाङ्गवत् बलहीना इत्यर्थः, करपादादौ स्वेदे कृते किञ्चिदुपलभ्यमानस्पन्दत्वेऽपि अतिमृदुस्पन्देति यावत्। अत्रातीसारशब्देन चिरातीसारं विहाय सर्व्वेषामेवातीसाराणां ग्रहणम्; तेनैवमवगन्तव्यं यत् सर्व्वेष्वेवातीसारेषु अधिकविरेचनात् कृच्छ्रतमत्वं, चिरातिसारे तथा विरेचने तु न कृच्छ्रतमत्वमिति। विलम्बिकायाम् अजीर्णरोगविशेषे, कदाचित् न तु सर्व्वदा इत्यर्थः, प्लवगा भेकवद्गमना, एतेन प्रायशः शान्ता एव वहति, कदाचित् प्लवगा भवतीत्यर्थः, आमातिसारे आमजन्यातीसाररोगे नाड़ी पृथुला पुष्टा, स्थूलेत्यर्थः, जड़ा च अन्योऽन्यानुविद्धेवेत्यर्थः, भवति इति शेषः। इति ग्रहणीसंग्रहग्रहणीविलम्बिकातिसारज्ञानम्॥ १०५॥

मलमूत्ररोधे विसूचिकायाश्च लक्षणमाह, निरोध इति।—मूत्रशकृतोः मूत्रपुरीषयोः, मिलितयोरित्यर्थः, निरोधे स्वेच्छया धारणे, अथवा, स्वत एव पुरीषविबन्धे, तुशब्दात् मूत्रविबन्धे च, नाड्यः इतराश्रिता एकतराश्रिताः, एकतरं दोषमधिष्ठिता इत्यर्थः, इति

**विसूचिकाऽभिभूते च भवन्ति भेकवत्क्रमाः ॥१०६**

आनाहमूत्रकृच्छ्ररोगवती नाड़ी ।

**आनाहे मूत्रकृच्छ्रे च भवेन्नाड़ीगरिष्ठता ॥१०७॥**

शूलरोगे नाड़ी ।

**वातेन शूलेन मरुत्प्लुवेन**
**सदाऽतिवक्रा हि शिरा वहन्ती ।**

---

मिलितापेक्षया न्यूनता क्रमस्य ज्ञेया। अयं भावः,—एषां वैदोषिकत्वात् मूत्रशकृतोरुभयोर्निरोधे यथा दोषप्रकोपो भवेत्, मूत्रस्य पुरीषस्य वा एकस्य संग्रहे तदपेक्षया अल्पदोषप्रकोपात् मिलितापेक्षया गतेर्मन्दताऽवधातव्या इति; एवं वैदोषिकत्वेऽपि वातजननत्वं मुख्यतया ज्ञातव्यम्। विसूचिकेति।—विसूचिकाशब्दोऽयं विष्टम्भपरतोदसामान्यात्, तेन विसूचिकाऽश्मरीमूत्रकृच्छ्रज्वरादिजन्यविष्टम्भाद्यर्थोऽवगन्तव्यः, तया अभिभूते आक्रान्ते सति क्रमाः नाड़ीनां गतय इत्यर्थः, भेकवत् मण्डूकवत् प्लवमाना इत्यर्थः, भवन्ति। अत्र विसूचिकाशब्दस्य विष्टम्भार्थकत्वात्, "विष्टम्भगुल्मेन च वक्ररूपा" इति वक्ष्यमाणवचनात् वक्रता, तथा "विसूच्यां दृश्यते नैव नैव स्थानं विमुञ्चति" इति प्रागुक्तवचनात् सूक्ष्मता च चिन्तनीया, तथा च कदाचित् भेकवत् क्रमानुभवः, कदाचित् वक्रताऽनुभवः, कदाचित् सूक्ष्मतया स्पन्दानुभवाभावः, कदाचित् स्पन्दानुभवोऽपि जायते इति अवान्तरभेदास्तूपदेशानुभवादिना ज्ञेयाः। इति मूत्रवर्चोग्रहविसूचिकाज्ञानम् ॥१०६॥

आनाहमूत्रकृच्छ्रयोर्ज्ञानमाह, आनाह इति।—आनाहः सविबन्धमुदरवेदनं तस्मिन् आनाहे, तथा मूत्रकृच्छ्रे च नाड़ीगरिष्ठता नाड्याः गरिष्ठता अतिगुरुता, भारवत्त्वमित्यर्थः, तथा उपदेशात् काठिन्यञ्च, जायते इति शेषः ॥ १०७ ॥

नाड्याः गतिविशेषेण शूलज्ञानमाह, वातेनेति।—वातेन वात-

ज्वालामयी पित्तविचेष्टितेन
साऽऽध्मानशूलेन च पुष्टिरूपा ॥ १०८ ॥

प्रमेहरोगवती नाड़ी।

प्रमेहे ग्रन्थिरूपा सा प्रतप्ता त्वामदूषणे ॥१०९॥

नाड़ीगत्या विषादिज्ञानम्।

उत्पित्सुरूपा विषविष्टिकाले
विष्टम्भगुल्मेन च वक्ररूपा।

हेतोः शूले (अत्र सप्तम्यर्थे तृतीया) वातशूले इत्यर्थः, मरुत्-प्लवेन वातोच्छलनेन, वातवृद्ध्या हेतुनेत्यर्थः, शिरा सदा सर्वदैव, अतिवक्रा अतिवक्रगत्या, "सदाऽतिवक्रा"इत्यत्र "सदोपवक्रा" इति पाठान्तरम्। वहन्ती धावन्ती सती, वहन्तीत्यस्य सर्वत्रैवान्वयः कार्य्यः; तथा पित्तविचेष्टितेन पित्तकार्य्येण, शूलेनेति पूर्वेणान्वयः, पित्तशूलेन सा शिरा ज्वालामयी पित्तस्य औष्ण्यात् अत्युष्णरूपा, वहन्ती सती, तथा आध्मानशूलेन च आध्मानयुक्तेन शूलेन, आमजक्रिमिजोभय-शूलेनेत्यर्थः, तयोरेवाध्मानधर्मित्वादिति भावः, पुष्टिरूपा स्थूलरूपा वहन्ती सती, वर्त्तते इति शेषः। ["पुष्टिरूपा" इत्यत्र "वक्ररूपा" इति पाठान्तरम्] उभयशूलेन उभयधर्म्मवती भूत्वा, पुष्टिरूपा भवतीति निर्गलितार्थः। उभयधर्मविरहेण तु आमशूलं क्रिमिशूलमेव वा इति बुद्धाः ॥ १०८ ॥

प्रमेहज्ञानमाह, प्रमेह इति।—प्रमेहे प्रमेहरोगे, सा नाड़ी, ग्रन्थि-रूपा मध्ये मध्ये ग्रन्थिमतीव, आमदूषणे तु प्रमेहरोगे एव आमदोषे विद्यमाने सति, प्रतप्ता कदुष्णा च भवति इति शेषः ॥ १०९ ॥

विषादिज्ञानमाह, उत्पित्सुरूपेति।—विषविष्टिकाले विषभक्षणे अथवा सर्पादिदंशने शरीरे विषस्य या विष्टिर्व्यापनं तत्काले, व्यापनाव-स्थायां ["विषरिष्टि" इति पाठे—विषस्य या रिष्टिः असाध्यलक्षणं तस्मिन् विषस्य असाध्यलक्षणसमूहे प्रकाशीभूते सतीत्यर्थः] नाड़ी

अत्यर्थवातेन अधः स्फुरन्ती
उत्तानभेदिन्यसमाप्तिकाले ॥ ११० ॥

नाड्या गुल्मादिरोगज्ञानम्।

गुल्मेन कम्पोऽथ पराक्रमेण
पारावतस्येव गतिं करोति ॥ १११ ॥

---

उत्पित्सुरूपा उत्पतितुमिच्छुरूपा, त्वङ्मांसं विदार्य्य वहिराजिगमिषुरिव उच्छूना अतिचपला चेत्यर्थः, भवतीति शेषः। "उत्पित्सुरूपा अपरिनिष्ठगमना" इति शङ्करः। विष्टम्भगुल्मेन विष्टम्भेन वातविष्टम्भेन मलविष्टम्भेन वा, गुल्मरोगेण च, विष्टम्भगुल्मरोगयोरित्यर्थः, नाड़ी वक्ररूपा वक्रगमना, चकारात् उत्पित्सुरूपा च, उत्पित्सुरपि वक्रगमना इत्यर्थः। अत्यर्थवातेन विष्टम्भगुल्मे वाताधिक्येन हेतुना अधः अधस्तात् स्फुरन्ती चलन्ती, वक्रा अपि तिर्य्यग्भेदिनी सतीत्यर्थः, वर्त्तते इति शेषः। तथा असमाप्तिकाले सम्यक् आप्तिः प्राप्तिः समाप्तिः सम्प्राप्तिरित्यर्थः, न समाप्तिः असमाप्तिः तत्काले असमाप्तिकाले तस्यैव रोगस्य प्राक् सम्प्राप्तेः, पूर्वं सम्पूर्णताप्राप्तेः इत्यर्थः, असम्पूर्णावस्थायां पूर्वरूपे इति यावत्, उत्तानभेदिनी उत्तानम् ऊर्द्ध्वीभूतं यथा तथा भिनत्तीति तादृशी, त्वङ्मांसम् ऊर्द्ध्वं विदारयन्तीवेत्यर्थः, वर्त्तते इति शेषः। यद्वा—अत्यर्थवातेनेत्यादि एकं लक्षणम्; असमाप्तिकाले अत्यर्थवातेन अधः स्फुरन्ती कदाचित् तिर्य्यग्भेदिनी तथा उत्तानभेदिनी कदाचित् ऊर्द्ध्वभेदिनी अपि भवतीत्यर्थः, वायोरस्थिरत्वादिति भावः। शङ्करसेनस्तु—"उत्तानभेदिन्यपि भवति, लतावदूर्द्ध्वं प्लवेन गच्छत्यपि। यद्वा—असमाप्तिकाले अन्तरा अन्तरा अधस्तात् ऊर्द्ध्वमपि यातीत्यर्थः" इति व्याचष्टे। "अत्यर्थवातेन" इत्यत्र "विषविष्टिकानाम्" इति पाठान्तरम् ॥ ११० ॥

गुल्मे विशिष्टां गतिमाह, गुल्मेनेति।—गुल्मेन गुल्मरोगेण, कम्पः नाड्याश्चलता, अथ अनन्तरं, वाक्यारम्भे वा, पराक्रमेण अति-

व्रणादौ नाड़ी।

व्रणेऽतिकठिने देहे प्रयाति पैत्तिकं क्रमम्।
भगन्दरानुरूपेण नाड़ीव्रणनिवेदने।
प्रयाति वातिकं रूपं नाड़ी पावकरूपिणी॥११२॥

वान्तशल्यहतादेः नाड़ीगतिः।

वान्तस्य शल्याभिहतस्य जन्तो-
र्वेगावरोधाकुलितस्य भूयः।

---

शयेन, ["प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया।] पारावतस्य पक्षिविशेषस्य इव गतिं भ्रमिवत् घूर्णनमिति यावत्, करोति, गुल्मे इति शेषः। उन्मादादिरोगेऽपि तद्रूपगतिं करोति इति वृद्धाः। यद्वा—पराक्रमेण साहसेन, अयथाबलमारम्भजनितेन उरःक्षतराज-यक्ष्मादिरोगेणेत्यर्थः॥ १११॥

व्रणादिज्ञानार्थं नाड्या गतिविशेषमाह, व्रण इति।—देहे व्रणे शारीरव्रणे, अतिकठिने सति अपक्वदशायां, पैत्तिकं क्रमं कुपितपित्त-जन्यां लावकादिगतिमित्यर्थः, प्रयाति, नाड़ीति शेषः। "अतिकठिने" इत्यनेन पक्वदशायान्तु न तथेत्यवगन्तव्यम्। "व्रणार्थकठिने देहे" इति पाठान्तरे—देहे व्रणस्थाने इत्यर्थः, व्रणार्थं व्रणनिमित्तं कठिने जाते सतीत्यर्थः। भगन्दरेति।—नाड़ीव्रणनिवेदने नाड़ीव्रणविज्ञाने, नाड़ी-व्रणज्ञानार्थेत्यर्थः, भगन्दरानुरूपेण भगन्दरसादृश्येन, भगन्दरे यथा प्रयाति तथा इत्यर्थः, नाड़ी पावकरूपिणी सदैव अत्युष्णा सतीत्यर्थः, व्रणस्थानेषु दुष्टरक्तसम्बन्धादिति भावः। वातिकं रूपं वातिकं लक्षणं, सर्पादिगतिवद्गतिमित्यर्थः, उक्तञ्चान्यत्र—"भगन्दर इव नाड़ीव्रणेऽपि वातिकं क्रमम्। भुजगादिवद्गमनं कुरुते पावकरूपिणी॥" इति। भगन्दरे नाड़ीव्रणे च नाड़ी सदैव अत्युष्णा सती भुजगादिगतिवत् वक्रा प्रयाति॥ ११२॥

वान्तस्येति।—वान्तस्य वमितस्य, शल्याभिहतस्य च शल्यशब्देन

**गतिं विधत्ते धमनी गजेन्द्र-**
**मरालमालेव कफोल्वणेन ॥ ११३ ॥**

---

शस्कुलीपृथुलगुड़ादयः, एतैरभिहतस्य पीड़ितस्य इत्यर्थः। तथा वेगानां निर्गमनोन्मुखानां मलमूत्रादीनाम्, अवरोधेन निग्रहेण, आकुलितस्य पीड़ितस्य, जन्तोः प्राणिनः, धमनी नाड़ी, कफोल्वणेन कफाधिक्येन हेतुना। ननु "छर्दिप्रसङ्गात् पवनस्य कोपः" इत्यनेन वान्तस्य कफोल्वणत्वं न विरुध्यते, प्रसङ्गपदस्य सातत्यार्थकत्वात्, किञ्च वमनस्य वृद्ध-कफहेतुत्वात्, वमनानन्तरमपि कदाचित् कफसत्त्वात्, शल्यहतादीनान्तु तथात्वं दोषवैचित्र्यादवगन्तव्यम्। गजेन्द्रः गजराजः, मरालमाला हंसश्रेणी सा इव गजराजगतिवत् हंसयूथगतिवच्च; तद्वत् मन्दा तथा कफाधिक्यात् स्थूला चेत्यर्थः गतिं भूयो बाहुल्येन विधत्ते धारयति। उक्तञ्च रामराजेन—"भुक्तस्य वान्तस्य च मेदुरस्य निद्रारतस्यापि तथा रिरंसोः। कफाकुलस्यातिसुखे रतस्य स्थौल्यं दधाना शिथिलं प्रयाति॥" इति। अत्र शाङ्करी व्याख्या यथा—"कफेति वान्ताद्यवस्था-नन्तरमपि कदाचित् तथात्वात्। तेन छर्दिप्रसङ्गात् पवनोऽपि अवश्यं धातुक्षयवृद्धिमुपैति इत्यादिना न विरोधः। तस्य धातुक्षयादि-व्यापारे सापेक्षत्वात्, कफोल्वणेन यथा तथेति नार्थः। तेन स्थूला मन्दा च। तथा च 'भुक्तस्य वान्तस्य च मेदुरस्य' इत्यादि रामराजः। एवं स्त्रीरोगादिकमपि रक्तादिक्रमेण ज्ञातव्यम्" इति। नाड़ी गजवर-गमनवत् मन्थरा। मरालो हंसस्तद्गतिरिव मन्दगमना च भवतीत्यर्थः। कफोल्वणेनेति एतयोरिव गतेर्मान्द्येनान्वयस्तेन स्तिमितमन्दगमना परिपुष्टा चेत्यर्थः॥ ११३॥

इति श्रीमज्जीवानन्दविद्यासागरविरचिता तदात्मजाभ्यां
प्रतिसंस्कृता नाड़ीविज्ञानव्याख्या।

---